राष्ट्रिय संस्कृत संस्थानम्

नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ३८ ॥

श्रीबालमुकुन्दभट्टेनविरचितम्

# रुक्मिणीमङ्गलम्

नामकाव्यम्

डॉ० सत्यव्रतत्रिपाठिना सम्पादितम्

योऽनूचानः स नो महान्

राष्ट्रियसंस्कृतसंस्थानम्

Rashtriya Sanskrit Sansthan

*( Under the auspices of the Ministry of Human Resources Development, Govt. of India )*

**New Delhi**

●

**Ganganatha Jha Kendriya Sanskrit Vidyapitha TEXT SERIES**

●

*General Editor*

**Dr. G. C. Tripathi**

●

# No. 38

# RUKMIṆIMAṄGALAM

*A Sanskrit Kāvya composed by*

BĀLAMUKUNDA BHAṬṬA

***Edited by***

Dr. Satya Vrat Tripathi

**ALLAHABAD**

**1993**

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयमानवसंसाधनविकासमन्त्रालयस्याङ्गभूतम् )
नवदेहली
गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला
प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

—•—

अष्टत्रिंशं प्रसूनम्

श्रीबालमुकुन्दभट्टविरचितम्

# रुक्मिणीमङ्गलम्

( महाकाव्यम् )

—•—

सम्पादकः
डॉ० सत्यव्रत त्रिपाठी

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
इलाहाबादः—२११००२
१९९३

श्रीबालमुकुन्दभट्टविरचितम्

# रुक्मिणीमङ्गलम्

( रुक्मिणीविवाहवर्णनपरं महाकाव्यम् )

सम्पादकः

डॉ० सत्यव्रत त्रिपाठी

श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

चन्द्रशेखर आज़ाद पार्क

प्रयाग-२११००२

१९९३ ई०

## FOREWORD

We are fortunate to present to the World of Sanskrit scholars a hitherto unknown *Kāvya* called *Rukmiṇī-maṅgalam* or 'the wedding of Rukmiṇī' composed by some Bālamukndа Bhaṭṭa about whom unfortunately not much is known.

The abduction of Rukmiṇī by Kṛṣṇa whom her father intended to marry to Śiśupāla, the king of Cedi country, and her subsequent marriage with Kṛṣṇa, is one of the most interesting episodes of Indian history and a number of poets of various Indian languages have tried to develop this theme into a poetic composition usually basing their work on the version of the story as contained in the Bhāgavata Purāṇa.

Only one manuscript of this work is known to exist and that is preserved in the Allahabad Museum. It was procured from a local Vaiṣṇava Goswāmī in the late forties or early fifties. A number of Maharashṭrian families have settled down in this holy City of Prayag since 16th century and it is my assumption that the author Bālamukunda Bhaṭṭa was a Maharashtrian Vaiṣṇava who wrote this work in Prayag perhaps in the 17th Century and that this is probably the original and the first manuscript prepared by the author as attested by innumerable corrections and emendations of the text which usually only its author would undertake.

The author of the Rukmiṇīmangala was more of a *bhakta* than a poet. He does not show a very good command over the Sanskrit language and is also not very adept at Sanskrit prosody. But the exuberence of his devotional sentiments towards his Iṣṭadevatā is visible everywhere.

I have had the pleasure of havnig Dr. S.V. Tripathi under me as Research Scholar for Ph.D. and the work has been carried out under my guidance. It is a great satifaction to me that it is now being issued as an independent work by this Institute. Even though a work of second order, if does enrich the Sanskrit litrature and is especially interesting and significant from the point of view of Kṛṣṇabhakti literature produced under the īnfluence of Vallabha and Viṭṭhala.

I shower my blessings upon my affectionate pupil Dr. S.V Tripathi and dedicate this Kāvya to the scholars of Sanskrit.

G. N. Jha K. S. Vidyapeetha
Allahabad
July 1st, 1993

**Gaya C. Tripathi**
*Principal*

# प्राक्कथनम्

रुक्मिणीमङ्गलाख्यकाव्यस्यैकमात्रं दुर्लभा च मातृका मया इलाहाबाद-संग्रहालयात् तस्य पूर्वनिदेशकानां मत्पूज्यपादपितृव्यचरणानां पितुरग्रजानां श्रीमतां डॉ० ऋषिराजत्रिपाठिमहोदयानां सौजन्येन समुपलब्धा। महाभागानामेतेषामनुग्रहेण पद्मश्री डॉ० सतीशचन्द्रकालामहाशयानां च सहयोगेन संग्रहालये विविधहस्तलिखितग्रन्थानामवलोकनं कुर्वता मया मनागप्यसौविध्यं नानुभूतमतः सर्वप्रथमं इमावेव द्वौ मुहुर्मुहुः प्रणमामि।

काव्यमिदं रुक्मिणीकृष्णयोः विवाहमाश्रित्य विरचितेषु काव्येष्वतीव प्राचीनम्, अस्य केवलमेकैव मातृकातीव दुर्लभा सा च स्वलेखवैशिष्ट्येन आकर्षकेति मे मतिः। काव्येऽस्मिन् प्रकाशिते सति ग्रन्थोऽयं रुक्मिणीविवाहविषयककाव्यमालायाः वियुक्तस्यैकस्य प्रारम्भिकमौक्तकस्य ज्ञापनं कारयिष्यतीति धिया मयैतत्समुद्धर्तुं सङ्कल्पः कृतः। यद्यपि काव्यमिदं कर्तुर्नातिवैदुष्यं द्योतयति तथापि परमभागवतेन कृष्णैकचित्तेन कविना बालमुकुन्दभट्टेन भक्तिभावेन चेतसा विरचितमित्यत्र न सन्देहलेशः। मातुः रुक्मिण्या उद्वाहः गान्धर्वेन विधिना सम्पन्नः न तु राक्षसेन इति निश्चितमानसः कविः स्वसङ्कल्पं ग्रन्थादावेवाब्रवीत्—

"वक्ष्ये गान्धर्वमुद्वाहं रुक्मिणीमङ्गलाभिधम्"

बहवः ग्रन्थाः भगवता श्रीकृष्णेन रुक्मिण्युद्वाहं राक्षसं स्वीकृत्य कथयन्ति। अनेन राक्षसेन विधिनोपयमेन कन्यका प्रथममसम्मानिता भवति यतो ह्यस्मिन् विवाहे दुहितुः पित्रोः सर्वथानुमोदनाभावः अपरत्र लोकेऽस्य दुष्परिणामोऽपि। अतः कविर्बालमुकुन्दभट्टो श्रीकृष्णं रुक्मिणीविवाहसम्बद्धानां नैक ग्रन्थानामिव चित्रयितुमनुचितमवगम्य श्रीशयोरुद्वाहं समुचिततरेण गान्धर्वरूपेण वर्णयित्वा तयोश्चरित्रं गौरवपूर्णं चकारैव भक्तजनमनांसि तुतोष च। एवं काव्यमिदं महत्त्वावहं विधाय लोके राक्षसोद्वाहस्य दुष्परिणामं निवारयितुं लोकसुधारकत्वेन स्थापयति।

एतत्तु महत्सौभाग्यं यदधीतानेकविद्यावदातचेतसां यशोभिरशेषदिशो धवलयतां स्वाध्यक्ष्येण उत्तर प्रदेश संस्कृत अकादमीं विभूषयतामस्मत्पूज्य-चरणानां गुरुवर्याणां विद्यापीठस्यास्य प्राचार्यपदमलङ्कुर्वतां त्रिपाठ्युपाह्वय-युतानां श्रीमतां डॉ० गयाचरणानामाशीर्वचोभिरुपचितेन मया तेषां प्रेरणया ग्रन्थोऽयं प्रकाशतां नीतोऽतोऽसकृत्प्रणतिततिभिस्तत्पदावपीडनेनात्मानमेवोपस्कोमि।

मातृकायाः पाठनिर्धारणे विविधसामग्रीसङ्कलनकर्मणि च प्रो० राजेन्द्रमिश्र-डॉ० किशोरनाथझा-डॉ० आजादमिश्र-डॉ० सुवोधचन्द्रपन्त-डॉ० जगन्नाथपाठकप्रभृतिभिराचार्यैः स्वकीया यदमूल्या क्षणाः सस्नेहं समर्पितास्तत्तु तेषां गौरवमभिवर्ध्य विशदहृदयत्वं प्रमाणयति सर्वे ते. सम्मान्या स्वजनाश्च तस्मात्स्वजनेभ्यो धन्यवादो नोपयुज्यते अपितु प्रणाम एव।

विद्यापीठस्यैव अन्ताराष्ट्रियशोधपत्रिकाया सम्पादयित्री स्नेहधरित्री डॉ० मायामालवीयापि यथावसरं यत्साहाय्यं विहितवती तदर्थं धन्यवादार्हा प्रणम्या च।

यथेष्टपुस्तकानामुपलब्ध्यै विविध पुस्तकालयाध्यक्षाणां डॉ० विजयनारायणमिश्र - श्रीश्रद्धानन्द पाण्डेय-श्रीदेवमणियाज्ञिक - डॉ० लक्ष्मीनारायण तिवारी प्रभृतिमहाभागानां कृते सहयोगरूपाभारभरितोऽस्मि।

अपि च डॉ० प्रकाशपाण्डेय-डॉ० विश्वम्भरनाथगिरिश्चोभावपि मित्रवर्यौ स्वसहयोगप्रदानाय सदैव स्मरणीयौ।

अल्पेनापि कालेन मनोहर मुद्रणार्थं शाकुन्तलमुद्रणालयाधिपान् श्रीयुतान् उपेन्द्रत्रिपाठिमहाभागान् हार्दं कार्तज्ञं ज्ञापयामि।

प्रयागः
वैशाखशुक्लपूर्णिमा
वि० सं० २०५०

विदुषामाश्रवः
सत्यव्रतः त्रिपाठी

# ग्रन्थस्य मातृकायाश्च सामान्यपरिचयः

## १. रुक्मिणीमङ्गलाख्यकाव्यस्य स्वरूपम्

प्रस्तुतमेतत् रुक्मिणीमङ्गलाख्यं काव्यं श्रीकान्हजीभट्टात्मजेन कविना बालमुकुन्दभट्टेन विरचितम्। काव्यमिदं महाभारते वर्णितं रुक्मिणीहरणं नाम लघ्वाख्यानमधिकृत्य कृतम्, एतस्य विषयस्तु महाभारतस्य सुख्यातपात्रेण श्रीकृष्णेन सह विदर्भराज्यान्तर्गतस्य कुण्डिननगराधिपतेर्भीष्मस्य दुहितायाः रुक्मिण्याः पाणिग्रहणम् । महाकाव्यपदवीं प्रापयितुं लघ्वाख्यानमिदं कविना बालमुकुन्दभट्टेन कविकल्पनया कतिपयान्यपात्राणां भूमिकाः सकौशलं संयोज्य परिवर्धितम्, काव्यमिदं त्रयोदशसर्गपरिमितमेव, यद्यपि चतुष्पञ्चाशच्छ्लोकपर्यन्तमेवोपलभ्यते, तथापि रुक्मिणीकृष्णयोरुद्वाहस्य सम्यग्वर्णनारूपमुद्देश्यम् कवेः परिपूर्णतां गतमिति मन्ये। द्वयोर्विधिवदुपयमोपरान्ते पुरोहितावुभयपक्षीयौ वरवध्वोः क्रमशः शाखाच्चारं कुलवर्णनं च व्याहरतः, हर्षिताश्च पुरौकसाः । अतःपरमनुपलब्धोऽयं ग्रन्थः।

प्रतिसर्गान्ते काव्यस्य कविना स्वस्य पितुश्च नामोल्लेखौ कृतौ, एतदतिरिक्तं न कुत्रापि तस्य तत्कुलस्य चोल्लेखोऽपि दृश्यते ।

ग्रन्थादावेव मंगलश्लोके कविना तस्येष्टगुरुर्वल्लभाचार्यो वन्दितस्तत्पश्चात् कथानायकः भगवान्श्रीकृष्णः। तस्माद्ग्रन्थोऽयं वल्लभसम्प्रदायस्येति प्रतीयते ।

काव्यं कुण्डिनाधिपतेर्भीष्मस्य गृहादारम्य श्रीकृष्णस्य द्वारिकापुरीं प्राप्य स्वकथावस्तु समापयति। यद्यपि काव्यमपूर्णं तथापि निष्कर्षोऽय तु समुदेत्येव यत् परिपूर्णे काव्ये एकद्विसर्गाधिक्येऽपि विषयवर्णनस्थलमस्य कृष्णस्य निवास एवाभविष्यत् यतोहि ग्रन्थस्य प्रतिपाद्यम्—

'वक्ष्ये गान्धर्वमुद्वाहं रुक्मिणीमङ्गलाभिधम्' ।।१।५।।

पूर्णताभावेऽप्यस्य समाप्तिमेति ।

एवं समुपलब्धेऽस्मिन् काव्ये रुक्मिणीकृष्णयोर्विवाहो विधिवद्वर्णितः। नायकश्चास्य वासुदेवः श्रीकृष्णः नायिका च भैष्मी रुक्मिणी। आत्मनो भैष्मीसंयोगे बाधकान् रुक्मिमशिशुपालादीन्निर्मथ्यैव कृष्णो रुक्मिण्याः पाणि ग्रहीतुं पारयति।

२. पाण्डुलिपेः परिचयो विशिष्टता च

**(क) लिपिलेखयोर्वैशिष्ट्यम्**—रुक्मिणीमङ्गलाख्यकाव्यस्य मातृका इलाहाबादसंग्रहालयस्य पाण्डुलिपिकक्षात् संग्रहालयस्य पूर्वनिदेशकस्य डा० ऋषिराज त्रिपाठीति महाभागस्य सौजन्येन मया समुपब्धा।

मातृकेयमाकारेण २३.४ से० मी० १२.३ से० मी० परिमिता वर्तते। ईषत् पाण्डुवर्णेषु हस्तनिर्मितपत्रेषु निखिलमेव काव्यमसितमस्या लिखितम्। लिपिकारदृष्ट्या ये अंशाः मातृकायामनभीष्टास्ते हरितालक्षेपेन लोपिताः। काव्यं सप्तचत्वारिंशत्पत्रेषु लिखितमुपलब्धम्। विभिन्नपत्रेषु प्रायो न्यूनतमा नवपंक्तयस्तत्र प्रतिपंक्ति षड्विंशतिवर्णा, यत्र चाधिकतमा चतुर्दशपंक्तयस्तत्र सप्तत्रिंशद्वर्णाः लभ्यन्ते। प्रतिपत्रे उपरि वामप्रान्ते 'रु० मं०' इति तन्नीचैः पत्रसंख्योट्टङ्किता। एवमेव दक्षिणभागेऽपि। केषुचित् पत्रेषु दक्षिणभागे पत्रसंख्योपरि रामेति लिखितम्। प्रथमपत्रे रामेत्यस्य नीचैः 'रु० वि०' लिखितम् सम्भवत इदं 'रुक्मिणीविवाहः' इति सूचयति।

मुखपृष्ठमध्ये 'श्रीरुक्मिणीमङ्गलाख्यं काव्यम्' संलिख्य वामप्रान्ते ऊर्ध्वतोऽधः क्रमशः द्वादशाङ्काः ६३, १४, ४२, ३०, २५, २६, ४८, ४४, ४६, ४९, ४२, ३९ इत्येवं रूपेण लिखिताः सन्ति। तत्रैव उपर्येकान्ते च ४७१ इत्यपि लिखितम्। इदमेव मातृकायाः मुखपृष्ठदृश्यम्। मुखपृष्ठे क्रमशो लिखितानामङ्कानां योगः वामभागे लिखिता ४७१ इत्येव संख्या। हस्तलेखे प्रतिसर्गान्ते प्रदत्ता संख्यापि प्रायः उपरि लिखितश्लोकक्रमानुसारमेव। केवलं दशम एव सर्गे मुखपृष्ठात्, अभ्यन्तरे सर्गान्तप्रदत्तश्लोकसंख्यायाः भिन्नता दृश्यते यत् मुखपृष्ठे ४९ इति अभ्यन्तरे ६५ इति।

प्रामुख्येन ध्यातव्योऽयं विषयः यत् द्वादशाङ्केष्वेकं विहाय सर्वाः संख्याः उपर्यभ्यन्तरे च सदृशा वर्तन्ते। परमभ्यन्तरे त्रयोदशसर्गस्य सप्तचत्वारिंशत्तमश्लोकस्य अपूर्णचतुर्थचरणपर्यन्तमेवोपलब्धोऽयं ग्रन्थः। तस्मात्प्रतीयते यल्लिपिकारेण प्रतिसर्गसमाप्तौ तच्छ्लोकसंख्या मुखपृष्ठो-

पर्युट्टङ्किता । सम्भवतः सम्पूर्णे त्रयोदशे सर्गे स पुनः एवमकरिष्यत् परं न जाने कस्मात् कारणाद्ग्रन्थं पूरयितुं नाशक्नोत् तस्मादेव मुखपृष्ठाङ्काः गणनायां द्वादशैव किन्तु मातृकाभ्यन्तरे त्रयोदशसर्गस्य सप्तचत्वारिंशत्तम-श्लोकं यावत् काव्यं वर्तते ।

निखिलैव मातृका देवनागराक्षरेषु सुस्पष्टमस्ति लिखिता। यत्र कुत्र-चिदेकस्यैव वर्णोपरि वर्णाः अपरे निर्मितास्तत्रैव किञ्चिदस्पष्टवर्णा लिपिः । यपवर्णयो कुत्रचित् साम्यात् औचित्यप्राकरणिकार्थौ चावलम्ब्यैवावगम्यो वर्णभेदः । सम्पूर्णमातृकायाः प्रतिपृष्ठे चतुःषु प्रान्तेषु ईषत्स्थानं विहायैव लिपिकारेण लिखितम् । वामेतरयोर्भागयोः रेखायुगलं विकृष्य तन्मध्ये एव अधिकांशतस्तेन लेखनायासः कृतः यस्मात् सुदर्शनेयं मातृका प्रतीयते । यर्हि लेखनकाले केचिद्वर्णाः अंशा वा विस्मृतास्तर्हि लिपिकारस्तान् पत्र-प्रान्तेषु सुलिख्य तैः सह तद्विस्मृतांशस्य पङ्क्तिसंख्यां विनिर्दिशत्यपि च विस्मृतस्थले द्वयोर्वर्णयोर्मध्ये उपरि वीति (v) आंग्लभाषाक्षराकारं लघुचिह्नं प्रयुङ्क्ते यस्मात् प्रान्तोल्लिखितवर्णान् तदुपयुक्तस्थले संयोज्या-ध्ययने नास्त्यसौविध्यम् ।

चरणद्वयोरन्ते श्लोकान्तेऽपि च लिखितश्लोकसंख्योपरि गैरिकवर्णः प्रयुक्तः एवमेव सर्गसमाप्तावपि **'श्रीकान्हजीभट्टात्मजबालमुकुन्दभट्टविरचिते रुक्मिणीमङ्गलाख्ये काव्ये** ......... **सर्ग.'** इति । अस्योभयोः पार्श्वयोः उपर्युक्तवदिव युगलविरामचिह्नोपरि गैरिकवर्णप्रयोगः । श्लोकसर्गसंख्ययोः द्वयोःपार्श्वयोरपि युगलविरामचिह्नं प्रयुनक्ति यस्मात् श्लोकसर्गान्तौ श्लोकसर्गसंख्याश्च पूर्णतः स्पष्टाः ।

हस्तलेखस्य पञ्चत्रिंशत्पत्रतः पूर्णरूपेण कृष्णा भास्वरा च मसी । एतत्पूर्वं हस्तलेखः ईषत्कृष्णोऽर्थाद्बभ्रुवर्ण इवाभाति । हस्तलेखेऽनभीष्टांशाः पिङ्गलहरिताललिप्तशाश्च सप्रयत्नदर्शनेनावगता भवन्ति । केषुचित्स्थलेषु अनभिलषितवाक्यानि केवलमसितमस्या रेखयैव लोपितानि । यत्र तत्र सम्पूर्णश्लोक एव हरिताललिप्तः । इत्थं सम्पूर्णमातृकायां सामान्यमातृकातः अधिकतरो हरितालप्रयोगो विहितः । अनवधानतया लिखिता अनभिल-षितमात्राः अपि सूक्ष्मतया हरिताललिप्ताः । श्लोकसमाप्तौ कतिपयस्थलेषु श्लोकसंख्योपरि ।५२।। तथा ।।६१।। एवं लिखितम् व्यत्यासबोधाय यथा पञ्चमसर्गस्य पञ्चमषष्ठश्लोकयोः संख्योपरि द्रष्टव्यम् । पद्धतिरियं श्लोक-

द्वयोः स्थितिपरिवर्तनं निर्दिशत्यर्थात् षष्ठः पञ्चमस्थले पञ्चमश्च षष्ठस्थले इति बोध्यः ।

यत्र तत्र लेखनान्ते कस्यचिद्वर्णस्यानीप्सिततां सूचयितुं तदुपरि विरामाकारं चिह्नं (।) प्रयुक्तवांल्लिपिकृत् । यथा—करीवनं नक्रवरेणेति स्थले अनीप्सितनकारोपरि इति । कुत्रचित् मात्राविलोपनहेतवे लघुयुगल-रेखाभिस्तद्विकृतिं विधाय अन्यमात्रायां च विसर्गचिह्ननिर्मित्या रूपमपरं प्रदत्तवान् यथा यदुनन्दनो इत्यस्य 'नो' वर्णस्य नः इत्येव रूपम् ।

अन्यप्राचीनमातृकाणामिवैव शब्दवर्णाः पृथक् पृथक् लिखिताः । अर्वाचीनरीत्या शब्दानामुपरि वर्णसंयोजनरेखा न कुत्रापि लभ्यते । अतः कुतः कः शब्द आरभ्यते इति निश्चेतुं पाठकस्य ऊह एवावलम्बनम् । समग्रा मातृका एकस्मिन्नेव प्रवाहे लिखिता । श्लोकसर्गान्तयोर्लिपिकारेण श्लोकम-परं सर्गं वा प्रारभयितुं मध्ये लेशमात्रमपि स्थानं न त्यक्तम् ।

यस्यामवस्थायां मातृका अपूर्णोपलब्धा तस्मात् काव्ये अन्यश्लोका-नामनुपलब्धानामपि प्रतीतिर्भवति । किन्तु सम्पूर्णहस्तलेखस्य विधि-वन्निरीक्षणेन चिन्तनेन च प्रतीयते यद्येन लिपिकारेण काव्यमिदं लिखितं तेन स्वयमस्यान्तिमः सर्गो न पूरितोऽन्यथा स्वपूर्वस्वभावानुसारमेव त्रयोदश-सर्गस्य श्लोकसंख्यापि मुखपृष्ठे अन्यद्वादशाङ्कानामिव ध्रुवमेव लिखिता स्यात् अतः मुखपृष्ठस्वरूपेणैव ग्रन्थस्य अपूर्णता द्योत्यते ।

अपूर्णमप्येतत् काव्यं स्वकीयमुद्देश्यमपूरयदिति मन्ये । यदि ग्रन्थः पूर्णोऽप्यभविष्यत्तर्हि नैकाधिकसर्गपरिमितोऽभविष्यत् । यथा हेमचन्द्ररायस्य 'रुक्मिणीपरिणयम्' स्वविषयं रुक्मिणीकृष्णयोर्विवाहमेव सम्पादयति तदपि त्रयोदशसर्गपरिमितमेव । एवमेव काशीनाथशर्म्मणो रुक्मिणीहरण मपि लोचनगोचरतां याति । अस्य अपूर्णताविषये इदं कथयितुं शक्यते यत् कविः लिपिकारो वा कस्माच्चित्कारणात् प्रतिबन्धकविशेषाद्वा नेदं पूरयितुमशक्नोदिति मुखपृष्ठस्वरूपमेवास्य प्रमाणम् ।

**(ख) लिपिकृत् कविश्च**—रुक्मिणीमङ्गलस्य प्रस्तुतोपलब्धमातृका-दर्शनेन ज्ञायते यल्लेखनकाले एव कविर्लिखितांशमनुपयुक्तमनुभूय तदंश हरितालेपेन मस्या वा विलोप्य अपरमंशमलिखत् । पूर्वापरांशयोर्नाधिक-भेदेऽपि कविदृष्ट्योपयुक्तांश एव लिखितः । अस्मान्न सिद्ध्यति कवि-लेखयोर्भेदः । यतो हि विविधाः वर्णाः शब्दा वा एतावदशुद्धाः यत्ते

कस्यचिदसंस्कृतज्ञलेखनी प्रसूता एव भवितुमर्हन्ति । मातृकायामनेकस्थलेषु डवर्णस्थले टवर्णः च्छ इत्यस्यस्थले 'क्ष' वर्णः तथा शषसवर्णेषु परस्परं विपर्यासः श्रवणभेदस्य शुद्धशब्दज्ञानाभावस्यैव परिणामः । एवं प्रकारकाणां त्रुटीनामाधिक्येनैव प्रतीयते यत् कविः वक्ताऽसीत् लेखकश्चाल्पशिक्षितः श्रोता । यद्यदा कविरकथयत् लेखकस्तथैवालिखत् । अतः कथनमिदं नाधिकमतर्कसङ्गतं यल्लिपिकारः कवेर्बालमुकुन्दभट्टस्य समकालिक आसीत् । लेखनकाले एव कविर्यथारुचि श्लोकानां शब्दानां च परिवर्तनमकारयत् तथ्यस्यास्य पुष्ट्यै अधोलिखितविषया ध्यातव्याः —

हस्तलेखे अनेकस्थलेषु हरिताललेपेन अनभिलषितशब्दान् चरणान् वा विलोप्य तदुपरि अभीष्टशब्दस्तोमानलिखत् लिपिकृत् । अधिकत्र सम्पूर्णश्लोक एव निरस्तीकृत्य हरिताललेपेन वा विलोप्याभिनवं रूपं प्रस्तौति । बहुत्र तु पिङ्गलहरितालोपरि लिखितान् शब्दसमूहान् पुनः उपरि रिक्तस्थाने लेखकोऽलिखत् । मन्ये एवं पाठकानाम् अध्ययनावगमनसौविध्यहेतवे एव कृतम् । यथा प्रथमसर्गे द्वितीयश्लोकस्य तृतीयचरणे 'समभवदखिलेशो गृहे वल्लभस्येति । एवमेव सप्तमसर्गाम्भे पंक्तिद्वयम्—

'पुत्रस्नेहवशं गतोऽथ नृपतिर्भीष्मोऽब्जजां स्वां सुतां
हृद्वाग्वर्ष्मभिरीश्वरे यदुपतौ सक्तां प्रजानन्नपि ।।
दास्यंश्चेदिसुताय श्रुतिमिवाम्बष्ठाय वैवाहिक'.....इति

एवमेव अन्यान्यपि उदाहरणानि यथा—२।१३, ३।२२, ४।३ ।

केषुचित्स्थलेषु v इति चिह्नं प्रयुज्य पत्रप्रान्ते श्लोकः पङ्क्तिर्वा श्लोकसन्निधौ च 'त्रु' इति लिखित्वा तत्पार्श्वे पंक्तिसंख्या निर्दिष्टा यथा द्वितीयसर्गे प्रथमश्लोकसमाप्तिमनु v चिह्नं प्रयुज्योपरि पत्रप्रान्ते पूर्णश्लोक एव—

'श्रुत्वा मुकुन्दस्य दयापराक्रमौदार्यक्षमाशीलबलादिसद्गुणान् ।
रूपं च चक्षुः फलमामनोहरं मेनेऽनुरूपं हरिमात्मनः पतिम् ।।२६।।
त्रु० ६' इति ।

तथा ६।२५ इत्यस्यानन्तरं v इति चिह्नं प्रयुज्य उपरि पत्रप्रान्ते पूर्णश्लोको यथा—

कृष्णो विप्रवरं स्वदैवतमिव श्रीद्वारवत्यां समा–
श्वस्यावासयदात्मनः प्रियतमां हर्त्तुं विदर्भात्मजाम् ।
गन्तुं तेन सहैव भीष्मनगरं पप्रच्छ पाणिग्रह–
स्यर्क्षं सोऽप्यवदद्द्विजोत्तमचरो द्वारावतीशं प्रति ।।२६।। इति

प्रथमोदाहरणे कविना ऋ० ६ इत्यनेन सङ्केतितं यत् ऋ० ६ इत्यस्यानुसारं प्रयुज्योपरि तत्पृष्ठस्य षष्ठा पङ्क्तिः। यतो मातृकायां प्रथमश्लोकस्य पश्चाल्लिखितश्लोकस्य संख्यापि ।।२।। इत्येव। अपि च उपरि लिखितश्लोकसंख्यापि तदेव, अतोऽनेनेदं प्रतीयते यदुपर्युक्तश्लोकं कविः पश्चात् प्रथमद्वितीययोर्मध्ये स्थापयितुमैच्छत्तस्मादेव द्वयोरेका संख्या। परिवर्तितश्लोकानां संख्यापरिवर्तनाभावकारणं सम्भवतः श्लोकस्यावश्यकताविषये कवेरनिश्चितत्वं।

अन्यस्मिन्नुदाहरणे ६।२५ इत्यस्य पश्चात् v इति चिह्नं पत्रप्रान्ते उपर्युक्तं पूर्णश्लोकं लिखित्वा पंचविंशतितमश्लोकमनु लिखितश्लोकयो २६, २७ इति संख्या २७, २८ इति परिवर्तिता। अस्मात्प्रतीयते यत् षड्विंशति सप्तविंशतितमश्लोकयोर्लेखनकाले एवं पञ्चविंशतितमश्लोकयोर्मध्ये एकस्यान्यश्लोकस्यावश्यकता कवेर्मनसि समुद्भूता अतस्तच्छ्लोकं स उपरि पत्रप्रान्ते लेखयित्वा षड्विंशतिसप्तविंशतिश्लोकयोः संख्यापरिवर्तनमकारयत्।

केषुचित्स्थलेषु अनीप्सितश्लोकाः पङ्क्तयो वा असितरेखाभिर्निरस्ताः। यद्यपि केचिद्धरितालविलोपितास्तथापि चिरकालेन दत्तावधानेन तेष्वनेके पठनीयाः यथा ७।१८ इत्यस्य पश्चादेकः त्रुटिपूर्णश्लोकः कृन्तितस्तथापि सुस्पष्टः—

'माता बलेनाथ शिरोव्यथान्वितां सुतप्तदेहां परिशुष्कहृन्मुखीम्।
तैलादिनाम्नो विकलां यथेणीं कोकादथापि स्नेहादिकस्पर्शमकारयत् सुताम् ।।२०।।

श्लोकस्यास्य स्थानपूर्तिहेतवे उपरि पत्रप्रान्ते श्लोकद्वयो लिखितः। तयोर्द्वयोर्द्वितीये उपर्युक्तोदाहरणस्य भावोऽधिकांशतः परिलक्ष्यते—

'वृकान्मृगीवद्धि विवाहकार्यतो भीतां स्मरन्तीं हरिमात्मरक्षकम्।
सुतामथोत्थाप्य महाग्रहेण तां तैलादिकस्पर्शमकारयत् प्रसूः' ।।२०।।

तथा ७।३२ इत्यस्य पश्चात्

('व्रजेशनन्दनार्तिहन् कदागमिष्यतीह वै
वदाशु विप्र ते पदं नमाम्यहं प्रतिक्षणम्।')

इति लिखित्वापि निरस्तीकृतः सुस्पष्टश्च । तस्मिन्नेव पृष्ठे उपरि—

'द्विजवर्यमानय दैवतज्ञमिहाशु ते वद ………। हं प्रणमामि भो सखि जीवनेश कदागमिष्यति कुण्डिनम् ।। इति पूज्य तं धनमर्प्य चादरतो प्रणम्य बुधोत्तमं' ।

लिखित्वा कर्तितः, अस्य सदृश एव त्रयस्त्रिंशत्तमश्लोकः निम्नलिखितः—

'द्विजवर्यमानय चाशु दैवविदं पदं प्रणमामि ते
सखि पृच्छ तं धनमर्प्य नम्य कदागमिष्यति मत्पतिः' ॥……॥३३॥

एवमेवान्येऽप्यनेके लभ्याः ।

हरितालिप्तस्थलानामुदाहरणं यथा—७।३४ इत्यस्य पश्चात् केचिदंशा अधोविधाः—

'प्रियनाथ कृष्ण दयानिधे शरणं गतास्मि तवार्तिहन्निजदर्शनं
परमप्रमोददमाशु देहि व्रजनाथ मां शरणां गतां विरहानले
पतितामवाद्य करीन्द्रवत्सरसीतले' ।।

मातृकायामुपरिलिखितकोष्ठांशः कर्तितो यत् स्पष्टः । तन्निरस्तांश-सदृशा पङ्क्तिर्नत्वस्य पूर्वं न च पश्चात् । अत्र तर्कोऽयं न प्रस्तोतुं शक्यते यल्लिपिकारस्य कालोऽपरस्तेन चानवधानतया पङ्क्तिरपरा अनुकृता । तात्पर्यमिदं यच्छ्रुत्वैव लिपिकृल्लिखति स्म, यथाऽदिदेश कविस्तथैव सोऽलिखत् ।

अपि च ९।२७ श्लोकस्य पश्चाल्लिखितश्लोकौ निरस्तीकृतेऽपि पूर्णतः स्पष्टौ—

'प्रसन्नचित्ता ह्यवलोकनाय तं सच्चिद्घनं श्रीवसुदेवनन्दनम् ।
समारुहत्सौधशिखं यदा सती तदारुटत्कञ्चुकबन्धनं भरम् ॥२८॥

'मुक्ताफलं घ्राणगतं ससार शङ्का बभूवुः दलितास्तस्या ।
सखी समूहं मुदिता बभूव त्यक्त्वा त्रपां लोकजनस्य तत्र' ।।२९।। इति

अनयोर्निरस्तीकरणतात्पर्यं सम्भवतः लेखयित्वा श्लोकाविमौ कविः लिखतस्थले न स्थापयितुमियेषेति । अपि च पूर्वप्रसङ्गवर्णनमधिकतरं विस्तारयितुमन्यान् सप्तश्लोकान् विरच्य, सार्थकत्वे निरस्तौ विशिष्ट-छन्दोभङ्गविरहितौ च पूर्वोक्तौ पुनर्न लेखयित्वा तत्सदृशावेव व्यरचयत्, यावेवं—

'प्रसन्नचित्तास्यसरोरुहा सा प्राणेश्वरस्यास्यविलोकनार्थम् ।
समारुहत्सौधशिखं सखीभिस्त्यक्त्वा त्रपां लोकजनस्य मोदात् ।।३५।।
तदैव तस्याः परमप्रमोदाच्छङ्का बभूवुर्दलिताः प्रकोष्ठे ।
मुक्ताफलं घ्राणगतं ससार स्तनांशुकाबन्धनरज्जुभेदः' ।।३६।।

दत्तावधानेऽत्र स्पष्टायते यत् पूर्वं निरस्तयोः पश्चात् प्रस्तुतयोः शब्दपरिवर्तनातिरिक्तं यद्यपि न किञ्चिदधिकतरं वैशिष्ट्यम् तथापि निश्चीयतेऽस्माद्यत् पूर्वोक्तश्लोकयोर्नियुक्तान् शब्दान् तेषां स्थानं च परिवर्तितुमियेष कविः तस्माद्धि किञ्चित्परिष्कृत्य तान् प्रवाहमयरूपेण नवीनश्लोकत्वे प्रास्तौत् ।

९।२९ इत्यस्य पश्चात्—

'अवेदयत्प्राप्तमजेशशेषसद्दैवं हृदीशं यदुनन्दनं तथा ।
तस्यं .......................... स्वयं ह्यानयनं...........................
(द्विजाग्रः पुनरात्मना) (हरे प्रति द्विजेन सत्यं)
....... ................ ।।३०।। द्विजःशशंस सत्यं वचनं ह्युपांशुतः' ।।३०।।
(कथितं वचः प्रियम्)

इत्यस्मिन् रेखाङ्कितोंऽशः लिप्तेऽनभीष्टे च सत्यपि स्पष्टः । एवमेव ८।४२, ९।३९ इत्यादयः ।

दशमसर्गारम्भस्त्वेवं विधः—

'भेरीमृदङ्गपटहानककांस्यशङ्खवेण्वादिरावमधिकं । हि निशम्य दूरात् ।।
कोऽयं समागत इति क्षितिपा भयेन
········जिज्ञासयास्य जुजुयुश्चरमेव सर्वे ।।१।।'
(भीता)

उपरि पत्रप्रान्ते कोष्ठकान्तर्गतांशः अन्यद्रूपेण एवं लिखितः—

'क्षितिपा निशम्य । कोऽयं स्वनेन भयमाशु ददन्नुपेत
इत्याकुलश्चरमरं जुजुयुर्भयेन ।।

श्लोकोऽयं न तु छिन्नः न चान्यस्थलमिव हरिताललिप्तस्तथा कोष्ठकगतांशः उपरि पत्रप्रान्ते लिखितश्च उभावेव सार्थकौ । स्थितिरियं श्लोकेऽपरेऽपि दृश्यते ।

अतोऽस्मात् प्रतीयते यद्वक्ता कविर्द्वयोरंशयोः स्थितिर्न निश्चेतुमशक्नोत्।

दशमे च सर्गे हरिताललिप्तांशा स्पष्टाः अन्येऽपि यथा १०।२६, १०।४३, १०।४६, ११।१५ श्लोके—

'टङ्कारयित्वा स्वधनूंषि दंशिताः ........................................।।५।।
(सिंहा यथोद्यत्य सुलाङ्गुलानि वै)
पुच्छान्समुद्यम्य यथा मृगेन्द्रकाः '।।५।। रेखितः अंशः कर्तितः।'

११।२२। श्लोक—

'सौरेः सरामाद्वसुदेवनन्दनात् ।। जितवान् बलैर्युतः ।।' इति

रेखाङ्कितः अंशः छिन्नः ।।११। २८ तमे—

'सुसंप्रतीक्षन्नु ........ .. .... वदत्पुरोधसं विवाहवेलां विगतां विलोक्य वै ।।२८
(पयामलग्नकं)

इति रेखाङ्कितोंऽशः 'न्न' इत्यस्य ह्रस्व 'उ' मात्रया सह निरस्तीकृतः। १२।१७ श्लोके च—

'बध्वारिं ....................................निन्दिततरं तं रुक्मिणं वेगतः' ।।
(वसनेन रुक्मिणमरिं संरब्ध)

रेखांकितः अंशश्छिन्नः। १२।२६ तमे श्लोके—

'राज्ञामयं विश्वसृजा विनिर्मितो वधार्हदोषोऽपि वधं न बन्धुतः'।

इत्यंशोऽवांछितेऽपि स्पष्टः। अस्य परार्धः एवम्—
रामोऽनुजं प्राह पुनः स्वबान्धवो वधार्हदोषोऽपि वधं न बन्धुतः ।।' इति

अस्मिन्नन्वितः। पूर्वार्धश्च सप्तविंशतितमे श्लोके एवम्—
'भैष्मीं पुनाराम उवाच वेधसा धर्मो नृपाणामयमाविनिर्मितः' ।। इत्यत्रान्वितः।

एवमेव १२।१८, १२।३२, १२।३६, १३।३, १३।१५ इत्यादयः पश्चाद्वर्तिस्थलानि मातृकायां ध्यातव्यानि १३।३१ तमः सर्वोपरिलिखितः १३।३० तमश्चातीव सदृशः। हस्तलेखे इत्यस्य सदृशः श्लोकोऽपरो वामेतरपत्रप्रान्ते लिखितः य एवम्—

'आवाह्य वारीशगणेशपार्वतीमुखान् विभूतीन् विधिवत् समर्चयत् ।।
वेद्यां यथावद्द्विजवर्यवाक्यतः कृष्णो विदर्भेशसुतान्वितस्तदा ।।३१।।

अस्य सदृशो दक्षिणपत्रप्रान्ते—

'आवाह्य वारीशगणेशपार्वती गन्धाक्षतापोभिरपूजयद्वै ।
वेद्यां यथावद्विधिवद्द्विजाग्रचवाक्येन कृष्णो रमयान्वितो हि ।।'

इत्युभयोः शब्दपरिवर्तनेऽपि पर्याप्तसाम्यम् । अस्मिन्नेव पृष्ठे वामप्रान्ते यथा

'विदर्भराजस्य पुरोहितोऽभवत् श्रीनारदः श्रीहरिदर्शनेच्छया ।
सौरेस्तु गर्गोऽस्ति पुरोहितो ह्युभौ श्रीकृष्णयोश्चक्रतुरात्मकर्मकम् ।।'

तथा पञ्चचत्वारिंशत्तमे पत्रे—

'गृहाण पुत्रीं मम यादवेन्द्र सर्वात्मना कृष्ण हरोऽनुरूपाम् ।
ददामि धर्मेण परेण तुभ्यमित्याह भीष्मः प्रणयेन वाचम् ।।'

इत्युभयोः श्लोकयोर्न काचित्संख्या। तस्मात्सिध्यति यदुभौ पश्चादेव विरचितौ । कविर्नास्य स्थानं निश्चेतुमशक्नोदन्यथा ६।२६, ६।२७ इत्याद्यन्यस्थलानामिव सङ्केतचिह्नं प्रयोज्य यत्र अरोचयिष्यत् तस्य परवर्त्तिश्लोकानां संख्याः अपरिवर्तयिष्यत् ।

एवं सामग्र्येण सर्गानुसर्गाः हरितालव्याप्ताः । अन्ते शाखोच्चारे १३।३४ तमे तृतीयचतुर्थचरणौ निरस्तीकृतौ यदेवं—

नारायणस्याखिलकारणस्य ब्रह्माभवन्नाभिसरोरुहाद्वै ।।३४।।

इत्यस्य स्थलं पुरयितुं—

'कृष्णस्य भैष्म्याश्च यथाक्रमेण परेशमारभ्य कुलस्य विज्ञाः ।।३४।।'

इत्यंशो लिखितः। अनयोरुभयोर्मध्ये एकश्लोकः लिखित्वा असितरेखया-निरस्तः तथापि स्पष्टः—

'तत्पुत्रतोऽत्रेरमृतांशुरासीद्बुधस्तुगैस्यापि पुरूरवा वै ।
तस्या पुरासीन्नहुषोऽपि तस्य ययातिरग्रोऽस्य यदुस्तु तस्य ।।' इति

अस्य तथा चतुस्त्रिंशत्तमे श्लोके निरस्तांशस्य भावः पञ्चविंशतितमे श्लोके स्पष्टीकृतः। पञ्चत्रिंशत्तमश्लोकस्य पश्चाद्वर्त्तिपूर्णश्लोकः छिन्नः यस्यार्थः षट्त्रिंशत्तमे स्पष्टः शब्दपरिवर्तनेऽपि ।

सम्पूर्णमातृका एकस्यैव व्यक्तेः पाण्डुलिपिरित्यस्मिन्न संदेहलवोऽपि। प्रतिपृष्ठं प्रदत्तांकाः अपि ग्रन्थलिपिकर्तुरेव लेखनीप्रसूताः यत्रकुत्रचित्पत्र-प्रान्तेषु श्लोका विद्यन्ते तेषु ये श्लोकसंख्याविरहितास्तेऽपि न किञ्चि-ल्लिपिभेदं द्योतयन्ति।

सम्पूर्णमातृकावलोकनेन इदमपि स्पष्टं यत् सर्व एव श्लोकाः एकस्यैव जनस्य ऊहस्य परिणामः। सम्पूर्णग्रन्थे सामान्यहस्तलेखतोऽधिक एव हरितालप्रयोगः। अतो नेदं दर्शनत्रुटिं द्योतयति यतोहि दृष्ट्वा अनुकरणे इयन्मात्रायां त्रुटीनामसम्भवत्वात्।

अपि च दर्शनानुकरणत्रुटिः स्वीक्रियेत तर्हि पङ्क्तिविपर्ययादधिकं नैव भवितुं शक्नोति किन्तु मातृकायां हरितालविलोपितेषु असितरेखया निरस्तीकृतांशेषु ये ये अंशा पुनः प्रयुक्तास्ते न तथैव विद्यन्ते। तेषां स्वरूपं शब्दसमूहाश्च परिवर्तिताः। अपि च निरस्तांशाः अपि सार्थकाः।

यत्र कश्चिदंशः कोष्ठकान्तर्गतः तत्सदृश एव तद्वर्णमात्राचरणा-नुसारं चान्यल्लिखितः। तयोर्नैकोऽपि निरस्तः द्वयोरुपयुक्तत्वात्। सम्भवतः एतादृशेषु स्थलेषु तदंशस्य स्थितिविषये किंकर्तव्यविमूढः प्रतीयते कविः।

यथास्माभिः पूर्वोक्तमपि यत् हस्तलेखे वर्णानां शब्दानां व्याकरणस्य सामान्यनियमानां चाज्ञानता दृश्यते यस्य शोधने कृते काव्यस्वरूपे प्रवाहे वा बाधा दूरं यान्ति। अतः लिपिकारो न काव्यस्य कविरपितु संस्कृत-भाषाज्ञानविरहितोऽल्पशिक्षितश्च। सम्पूर्णमातृकायां लिपिकारः केनाप्या-दिष्टः प्रतीयते।

अत्र तर्कोऽयमधिक उपयुज्यते यल्लेखकः कवेः समकालिकः श्रोता चासीत्। सम्भवतः कविरस्य, यस्त्वाशुकविः, केनाप्यन्येन काव्यं लेख-यतिस्म। कारणमस्य सम्भवतः कवेः काचिदसमर्थतैव। सहैव सामान्येन संशोध्याशुद्धयः सूचयन्ति यत् कविना सम्पूर्णग्रन्थो नावलोकितः। सम्भवतः काव्ये पूर्णे सति तदद्रक्ष्यत्। किन्तु यत्केनापि कारणेन न सम्पूर्णोपलब्धोऽयं ग्रन्थः। सम्भवतः कविः काव्यं पूरयितुं नाशक्नोदस्य प्रमाणं हस्तलेखस्य स्वरूपं स्वयमेव। यतोहि मुखपृष्ठोपरि लिखितसंख्याः क्रमशो द्वादशविधाः अर्न्तगतश्लोकसंख्याश्च प्रायेण तदेव। अतः सिद्धयति यत् कविना त्रयोदश-सर्गो न पूरितः अन्यथा तस्य श्लोकानां संख्यापि मुखपृष्ठे उट्टङ्किता स्यात्।

सम्पूर्णकाव्ये अत्यधिकसंशोधनं श्लोकानां श्लोकांशानां च स्थितिविषये अधिकाधिककिङ्कर्त्तव्यविमूढता सिद्ध्येत चेदिदं कवेरपरिपक्वमस्तिष्कस्य परिणामं प्रथमकृतिश्च । किन्तु महाकाव्यरचने सफलोत्साहः कवेर्गरिमां वर्द्धयत्येव । काव्यावसाने अत्यधिकनिरस्तीकरणेन संशोधनेन हरिताल-प्रयोगेण च कवेर्धैर्यलोपः प्रतीयते । तथापि सः —

'वक्ष्ये गान्धर्वमुद्वाहं रुक्मिणीमङ्गलाभिधम् ।।'

इत्यस्मिन्नुद्देश्ये ग्रन्थस्यापूर्णत्वेऽपि सफलः । इदमन्यद्यत् केनापि कारणेन स ग्रन्थं पूरयितुं नाशक्नोत् ।

## कविपरिचयस्तस्यकालश्च

### १—रुक्मिणीमङ्गलकाव्यस्य कविः

रुक्मिणीमङ्गलकाव्यस्य रचयिता बालमुकुन्दभट्टः पिता चास्य श्रीकान्हजीभट्टः इति प्रतिसर्गान्ते पुष्पिकयैवसूच्यते । पुष्पिका तु एवंयथा—
**'इति द्राविड श्रीकान्हजीभट्टात्मजबालमुकुन्दभट्टेन विरचते.......सर्गः ।'**

कवेः पितुर्नाम्नः पूर्वं द्राविडशब्देन प्रतीयते यदयं दक्षिणभारतीयः एव आसीत् । अस्य नाम बालमुकुन्दभट्टः पितुर्नाम श्रीकान्हजी इति द्वावेव कृष्णस्यापरपर्यायाभ्याम् अभिहितौ । अस्य पितुर्नाम्ना ज्ञायते यत् पिता कान्हजीभट्टोऽपि कृष्णभक्त एव आसीदिति सम्भाव्यते येन एतादृक् नाम चकार । एवं कविर्वंशानुगतरीत्यैव कृष्णभक्तिशाखायाः सुरभितः पुष्प आसीदित्यस्मिन् विषये न कश्चिद्विसंवादः ।

मातृकायाः परिचयं ददता प्रमाणपुरस्सरं तस्याः लेखकः कवेः समकालिकः इति स्पष्टीकृतम् । कविर्वक्ता मातृकायाः लेखकश्च श्रोता इत्यपि समाधानं कृतम् । अतः मातृकायाः प्रयागे एवं प्राप्तत्वाद् इदं कथयितुं शक्यते यत् कविरस्य कुतश्चिद् दक्षिणप्रदेशादागत्य प्रयागे उवास ।

वल्लभाचार्यः कतिपयकालार्थं प्रयागस्य 'अरैल' क्षेत्रे स्वनिवासं चकार तदनु विट्ठलोऽपि यदा कदा तत्रागत्य प्रतिवसतिरम । संभवतः

तस्मिन्नेव काले कश्चिदविश्रुत एव तस्य शिष्यः वालमुकुन्दभट्ट आसीत्। विठ्ठलनाथः कवेर्गुरुरासीदिति काव्यस्य कालनिर्णयं कुर्वता मया लिखितम्। तेनायं कृष्णभक्तिसम्प्रदायस्य एव प्रतीयते इति मतम्। अतोऽधिकं न प्राप्यते कवेर्वालमुकुन्दभट्टस्य कुत्रचिदपि उल्लेखः।

**२—काव्यस्य रचनाकालः**

रुक्मिणीमङ्गलाख्यस्य काव्यस्य तत्कवेर्वालमुकुन्दभट्टस्य कालस्य विषये न किञ्चिन्निश्चयेन वक्तुं शक्यते, अन्तःसाक्ष्यस्य वाह्यसाक्ष्यस्य च विशेषेण अभावात्। निखिले एव काव्ये कविना न कुत्रापि एतादृक्प्रमाणं प्रस्तुतं येन काव्यस्य रचनाकालविषये निश्चयो भवेत्। केवलं स्वस्य पितुश्च नाम्नी प्रदायैव विरमति कविः। यर्हि सम्पूर्णमिदं काव्यं समुपलभ्येत तर्हि सम्भवतः ग्रन्थस्य कालो निर्दिष्टो भवेत्। किन्तु दुर्भाग्यमिदं यदन्तिमांशोऽस्य नोपलब्धः।

तथापि ग्रन्थारम्भं कुर्वता कविना सर्वप्रथमं वल्लभाचार्यस्तदनु तस्य सुतः विट्ठलनाथः स्तुतः वल्लभाचार्यस्य कालः १४७६-१५३० ख्रीष्टाब्दः वर्तते। तस्मिन् काले उत्तरभारते कृष्णभक्तेः सर्वत्र भूयान् प्रचारोऽजायत। वल्लभाचार्येण ब्रह्मवादस्य भक्तेः शुद्धस्वरूपस्य श्रीविठ्ठलनाथात् पूर्वं न लिखितमिदं काव्यम। विठ्ठलनाथस्य कालः १५१५ ई० वर्षतः १५८५ ई० वर्षपर्यन्तं विद्यते। आचार्यरूपेण तस्य प्रतिष्ठा प्रसिद्धिश्च प्रायः १५५० ईशवीयवत्सरात् प्राक् नाभवत् इति प्रतीयते। एतदेव ग्रन्थस्यास्य उच्चतमसीमा।

निम्नतमसीमा चास्य काव्यस्य एकेन महत्त्वावहेन वाह्यसाक्ष्येण निर्धारिता भवति। विष्णुदासाह्वयेन केनचिद् हिन्दीकविनापि हिन्दीभाषायां 'रुक्मिणीमङ्गल' आख्यं काव्यम् विरचितम्। अस्मिन् हिन्दी काव्ये अस्माकं संस्कृतरुक्मिणीमङ्गलस्य पुष्कलः प्रभावः परिलक्ष्यते।

बालमुकुन्दभट्टकृतस्य रुक्मिणीमङ्गलस्य हिन्दीभाषायां विष्णुदासकृतस्य रुक्मिणीमङ्गलस्य च परस्परं भावे शब्दसंयोजने चातीव साम्यं यथा—

१—हिन्दी रुक्मिणीमङ्गले यदा रुक्मी सर्वेषां समक्षं स्वस्वसुर्वररूपेण शिशुपालस्य नाम प्रस्तौति—

'मैं देख्यो दमघोष को बिटवा सुन्दर नीकी जोरी ॥१८ पद ।

संस्कृत रुक्मिणीमङ्गले एवं—

'चेदेः कुमारःशिशुपालनामा योग्यः पतिर्मे स्वसुरात्मतुल्यः ॥३।३४।

रुक्मिण एवोक्तिर्यथा हिन्दी रुक्मिणीमङ्गले—

'गाइ चरावत वन वन डोलत करत फिरत माखन की चोरी ॥१८ पद ।

संस्कृते तु—

योऽचोरयद्गोकुलवासिनां गृहे गृहे धृतं दुग्धदधीनि नित्यशः ॥३।३०

योऽचारयद्गा व्रजवासिनां सुतैर्वने वने .... .... .... ॥३।२१

२—हिन्दी रुक्मिणीमङ्गले यदा माता स्वसुतां रुक्मिणीं तैलं स्पर्ष्टुं, उद्वर्तन-लेपं कारयितुं, सर्वाणि मङ्गलकृत्यानि कर्तुं च समादिशति तदा रुक्मिणी कथयति—

'मो मन ताप चढ्यो अतिभारी सिर दुःख होत अपार ।
अंग उबटना क्योंकर लाऊं, देखो नैन निहार ॥७४ पद॥

संस्कृते—

ज्वरेण तीव्रेण युतास्मि मे मनः संलीयते धारयितुं न शक्यते ॥७।११
सकम्पशीतज्वरतापतोऽनिशं दिनत्रयान्मे परितप्यते तनुः ॥
अतो न शक्ये गदितुं मुखेन तत्स्नानादिकं कर्तुमहं कुतः प्रसो ॥१२॥

३—हिन्दी रुक्मिणीमङ्गले—

'देहुंगी मैं श्राप मुझे जोरी जो सतावै ।
मेरे पति नन्दनन्दन मथुरा के स्वामी ।
घट घट व्यापक आप जीवन के अन्तर्यामी ॥७६ पद ।।

संस्कृते—

अधिकं ब्रवीषि यदा प्रसो भवतीं शपामि रुषा तदा
वचनं दहेज्जवलनोऽग्रजस्य मुखे पतत्वनिशं पविः ।
हृदयक्षते सहजैः कृते लवणं ददासि पुनः पुनः
पतिरस्ति मे व्रजनाथ ईशविधीन्दुशेषमुखस्तुतः ॥८।२७॥

४—हिन्दी रुक्मिणीमङ्गले रुक्मी सर्वानग्रजान् विरुध्य भगिन्या विरोधमविचिन्त्य च स्वयमेव 'देवप्रबोधिन्याम्' एकादश्यां तिथौ विवाहमुहूर्तं विचार्य ब्राह्मणमेकं शिशुपालं निमन्त्रयितुं प्रेषयति—

'देव उठनी का साहा लिखिया पण्डितकुर बुलवाय के ।।२५ पद ।

संस्कृते—

'विवाहलग्नं त्वयमूर्ज्जशुक्लपक्षे कवौ विष्णुदिनेऽर्धरात्रे ।
स्वसुर्लिखित्वा परिशोध्य मित्रैश्चैद्याय सम्प्रेषयतिस्म घोरः ।।३।३७।।'

हिन्दीभाषायाः 'देवउठनी' एकादशी कार्तिकशुक्लस्य प्रबोधन्येकादशी । संस्कृतेऽपि 'ऊर्ज्जशुक्लपक्षे कवौ विष्णुदिने' इत्यस्य तात्पर्यं देवउठनी इत्येव ।

तथ्यमिदं महत्त्वपूर्णमिदं यदियं 'देवोत्थानी' (प्रबोधिनी) एकादशी श्रीमद्भागवतादारभ्य इदानीं यावदस्माभिः दृष्टचरेषु अनेकेषु रुक्मिणीविवाहविषयककाव्येषु न कुत्रचिदुल्लिखिता दृश्यते । केवलमुभे इमे एवेमां तिथिं सूचयतः । इत्यवधेयम् ।

५—हिन्दीरुमिक्णीमङ्गले मध्येनिशमेव यदा रुक्मिणीप्रेषितेन ब्राह्मणेन सह कृष्णो भैष्मीं हर्त्तुमगमत्तदा बलरामः प्रातरुत्थाय भ्रातृस्नेहेन अचिन्तयत्—

आप अकेलो रथ चढ़ि धायो कहा भयो मति हीनो ।।१३२। पद

संस्कृते—

एको गतो भीष्मसुतां हि हर्त्तुं वदाम्यहं तस्य मतिं किमद्य ।।८।६

६—हिन्दीरुक्मिणीमङ्गले रुक्मिणी ब्राह्मणमभ्यर्थयति—

'कर जोरूं विनती करूं लागूं तुमरे पाय ।
जो जावो द्विज द्वारिका दूंगी दरब अघाय ।।दो० ७८।।

संस्कृतरुक्मिणीमङ्गले—

विज्ञप्तिमेकां शृणु विप्र ते पदं नमाम्यहं द्वारवतीं व्रजाशिवम् ।
दास्यामि तेऽहं बहु दक्षिणां प्रभो .... .... .... ।।४।२।'

७—विवाहकाले कुलवर्णनविषयिका एका पङ्क्तिः—

प्रोहत ने सब कुली बखानी यदुवंसीन की साख उचारी ॥१६६ पद ॥

संस्कृतरुक्मिणीमङ्गले—

गर्गादयो विप्रगणो हि शाखोच्चारं समन्ताद्विदधे विवाहे ।
कृष्णस्य भैष्म्याश्च यथाक्रमेण परेशमारभ्य कुलस्य विज्ञाः ॥१३।४१॥

८—हिन्दीरुक्मिणीमङ्गले यदा प्रसूः रुक्मिणीविवाहोपक्रमाय निर्दिशति तदा पद्यमेकं रुक्मिणीगदितं यस्मिन् 'स्याम' (कृष्ण) शब्दः नैकवारं प्रयुक्तः —

अरी अब मान लै माई तोको मैं समझाऊं ॥ टेक ॥
स्याम रूप मेरे मन मानो रोम रोम सुख पाऊं ।
स्याम वारन दृग अञ्जन स्याम अञ्जन अंजवाऊं ।
स्याम स्याम भृकुटी कस्तूरी स्याम पलक लहेकाऊं ।
स्याम स्याम मुख रेख रदन की देखि-देखि हुलसाऊं ।
स्याम स्याम तिल है तन मेरी तिनकी सीस नवाऊं ।
स्याम स्याम दोऊ उर ऊपर स्याम गुही गुदवाऊं ।
विष्णुदास प्रभु स्याम सुन्दर कूं कौन भांति बिसराऊं ॥७८ पद ॥

संस्कृते यदा नारदः कृष्ण एव रुक्मिणीपतिरिति कथयित्वा यातः ततः प्रभृति रुक्मिणी कृष्णमयी भवति—

प्रसन्नचित्ता विचरत्यहर्निशं श्रीकृष्णपादार्चनकर्मणि द्रुतम् ।
निधाय कृष्णं हृदि कृष्णवाससा सुसंवृता कृष्णकचावृतानना ॥३।७॥

सुकृष्णशङ्गा मणिकृष्णभूषणा मनोज्ञकृष्णास्तरणा सुकृष्णदृक् ।
कृष्णान् पदार्थाननुरागसंयुता विलोकयन्ती फलदर्पणादिकान् ॥८॥

श्रीकृष्णमेवानुरटत्यहर्निशं भैष्मी यथा चातक इष्टवारिदम् ।
सर्वेन्द्रियैः कृष्णपदाब्जसेवने आत्मार्पणं सा हरयेऽकरोत् सती ॥६॥

एते संस्कृतश्लोकाः हिन्दीभाषायाः रुक्मिणीमङ्गलस्योपर्युक्तपद्यस्य इव नैकवारं कृष्णशब्दस्य प्रयोगं दर्शयन्ति। एतदतिरिक्तं उभयत्र कथा-दृष्ट्यापि साम्यमनेकस्थलेषु दृश्यते एव यथा—

१. द्वयोरेव ग्रन्थादौ नारदमुनिः भीष्मगृहं समागत्य कथयति यत्

कृष्ण एव रुक्मिण्याः पतिर्भविता, तमेव बहुधा प्रशंस्य पतिरूपेण स्वीकर्तुं रुक्मिणीं निर्दिशति ।

२. उभयत्र लोकोत्तरशक्त्या रुक्मिणी आशीर्वचः वरदानं च प्राप्नोति । हिन्दीरुक्मिणीमङ्गले विवाहात् बहूनि दिनानि पूर्वमेव दुर्गायाः संस्कृते च विवाहस्य पूर्वेह्नि एव आशीर्वचः प्राप्तिः ।

३. हिन्दीरुक्मिणीमङ्गले शिशुपालस्य वरयात्रायां समागतायां यदा रुक्मिणी मूच्छिता, तत्रोपस्थिताः एकादशसख्यः क्रमश आजन्मनः कृष्णचरितं संश्राव्य यानि पद्यानि उद्गिरन्ति तानि संस्कृतरुक्मिणीमङ्गलस्य नारदकृतकृष्णगुणकीर्तनसदृशानि एव ।

एवमुपर्युद्धृतेभ्यः निश्चयेन वक्तुं शक्यते यदेकस्यापरे प्रभावः अस्त्येव । न कस्यचिदन्यस्य रुक्मिणीविवाहसम्बन्धिकाव्यस्य प्रकृतकाव्येन एतादृक्साम्यं दृष्टम् ।

अथ हिन्दीरुक्मिणीमङ्गलस्यापि कालनिर्धारणमावश्यकम् । अस्मिन् सन्दर्भे कालनिर्णयं कर्तुं हिन्दीभाषायाः रुक्मिणीमङ्गलस्य प्रकृतसंस्कृत-रुक्मिणीमङ्गलापेक्षया सुकरता वर्तते । कवेरस्य कालः सम्पादकेन नीलकण्ठपुरुषोत्तमजोशी महोदयेन यद्यपि पञ्चदशशतकख्रीष्टाब्दस्य पूर्वार्द्धे १४३५-१४४२ निर्धारितः । किन्त्वत्रास्माकं वैमत्यं वर्तते, यतोहि अस्य सम्पादनं कुर्वता तेनैव अनेकाः शङ्का समस्याश्च न समाहिताः । अतस्तस्यैव मतं तेनैव भिद्यते । तेनोत्पादितशङ्काः एवं समाहिता भवन्ति—

१. हिन्दी रुक्मिणीमङ्गले गुजरातप्रदेशस्य प्रसिद्धसन्तो नरसीमेहता—धन्नाभगत—सेनानाईचोल्लिखिताः । महाराष्ट्रस्य सेनानाई इत्यस्य कालः १४४८ ख्रीष्टाब्दः[1] इति । नरसीमेहतामहोदयस्य कालः १४१४ ईशवीयवर्षतः १४८१ ईशवीयवत्सरमध्ये स्वीक्रियते किन्तु कन्हैयालाल मुंशी प्रभृति-बुधास्तम् अस्मात् शताब्दैकं परमेव मन्वते[2]। अतः हिन्दीरुक्मिणीमङ्गलकार. विष्णुदासः न षोडशशताब्दस्य अन्तिमचरणात् पूर्वं भवितुमर्हति ।

२. शिशुपालश्रीकृष्णयोः संयुगे तोपगोलीजम्बूरबाणप्रभृतीनाम् आग्नेयास्त्राणां प्रयोगः । तोपाख्यमाग्नेयमस्त्रं यथा—

तोब रहेकले चलने लागे ऊंची चलत हबाई ।।१७३

---

१. सिद्धेश्वरशास्त्री चित्राव, प्राचीनचरित्रकोश, पृष्ठ ६१४ ।

२. हिन्दी विश्वकोश, नागरीप्रचारिणी सभा, वाराणसी खण्ड ६, पृष्ठ २४८ ।

गोलीत्याख्यमाग्नेयम् अस्त्रं यथा—

रुक्मिन रथ बैठाय के हांकत आय मुरार ।
इत उत चारों ओर ते गोली चलत अपार ।।१६८। दोहा ।।

सर्वप्रथमं भारते एतेषां प्रयोगः बाबरेण पानीपतस्य रणक्षेत्रे १५२६ ख्रीष्टाब्दे कृतः । अतः नूनमेव कविः १५२६ ख्रीष्टाब्दात् पूर्वं न स्यात् ।

३. कविना प्रयुक्ताः ठुमरीदादराप्रभृतयो रागाः पञ्चदशशताब्दस्य पश्चादेव आविष्कृताः इति ।

४. रुक्मिणीमङ्गलस्य भाषायां फारसीशब्दानां बाहुल्यम् । अपि च रामायणकथायाः भाषा शैलीचास्य रुक्मिणीमङ्गलस्य शैल्या विभिद्यते । अतः इदं कथयितुं शक्यते यत् रामायणमहाभारतकथयोः कविः विष्णुदासः अन्यः, हिन्दीरुक्मिणीमङ्गलस्य विष्णुदासश्चान्यः इति ।

नीलकण्ठपुरुषोत्तमजोशीमहोदयेन रामायणकथामहाभारतकथयोर-धिकृत्य हिन्दीरुक्मिणीमङ्गलकारस्यः कालः निर्धारितः स तु चिन्त्यः एव । एवमुपर्युक्तैरुद्धरणैर्निश्चीयते यत्कवेः विष्णुदासस्य कालः षोडशशताब्दात् पूर्वं कथमपि न भवितुं शक्नोति ।

यदि कन्हैयालालमुंशीमहोदयेन निर्धारितः नरसीमेहतामहोदयस्य कालः षोडषशताब्दस्यान्तः स्वीक्रियेत चेत्तर्हि हिन्दीरुक्मिणीमङ्गलकारस्य कालः १५७५-१६५५ ख्रीष्टाब्दस्य मध्ये निर्धारयितुं शक्यते । एकमपरं तथ्यं हिन्दीरुक्मिणीमङ्गलं संस्कृतरुक्मिणीमङ्गलस्य पश्चात् स्थापयति यदनेकेषु स्थलेषु हिन्दीरुक्मिणीमङ्गले वर्णनं प्रकृतसंस्कृतरुक्मिणीमङ्गलात् परिष्कृतं प्रशस्यतरं च । अपरं साक्ष्यं द्वयोरतीव साम्यं वर्तते । उप-र्युद्धृतेषु तुल्यांशेषु पर्यालोचितेषु स्पष्टं भविष्यति यद्यानंशान् संस्कृत-रुक्मिणीमङ्गलकारः अधिकवर्णेषूपवर्णयति तान् हिन्दीरुक्मिणीमङ्गलकारः अधिकतरकौशलेन, सुन्दरतया परिष्कृतरूपेण च समासेनैव कथयति । तस्मादिदमपि यद्युच्येत यत् कदाचित् प्रकृतसंस्कृतरुक्मिणीमङ्गलं हिन्दी-रुक्मिणीमङ्गलकारेण पठितं श्रुतं वा भवेत् तन्न असमीचीनम् ।

एवम् हिन्दीरुक्मिणीमङ्गलोपरि संस्कृतरुक्मिणीमङ्गलस्य प्रभावः उपरि प्रदर्शितः । हिन्दीरुक्मिणीमङ्गलस्य रचनाकालः १६०० ई० उपर्युक्त-विवेचनेन निर्धारयितुं शक्यते । अतः १६०० ख्रीष्टाब्दात् पूर्वमेव संस्कृत-रुक्मिणीमङ्गलकाव्यं विरचितं भवेत् ।

समासेन एवं निश्चयपूर्वकं वक्तुं शक्यते यदस्माकं रुक्मिणी-मङ्गलाख्यकाव्यस्य रचनाकालः १५५० ईशवीयवर्षतः १६०० ईशवीय-वर्षपर्यन्तं कदापि भवितुमर्हति।

वालमुकुन्दभट्टःविठ्ठलनाथस्य समकालिकः तस्य कश्चिच्छिष्यश्च प्रतीयते। कविः षोडशशताब्दस्यान्तिमे चरणे विठ्ठलनाथस्य जीवनकाले एव काव्यमिदं व्यरचयदिति निगदितुं शक्यते, अन्यथा विठ्ठलपरवर्ती कश्चिदन्य आचार्योऽपि ध्रुवमेव स्तुतः स्यात्।

## रुक्मिणीमङ्गलस्य कथावस्तु

### प्रथमः सर्गः

आसीद्विदर्भदेशे कुण्डिनपुरस्याधिपः भीष्मको नाम राजा। तस्य रुक्मी-रुक्मरथः-रुक्मवाहू-रुक्मकेशो-रुक्ममाली चेति पञ्चपुत्रा आसन्। एतेषां रुक्मिणी स्वसाऽसीत्। गुणवतीं किशोरीं च स्वां कन्यां दृष्ट्वा भीष्मः तदुपयुक्तवरविषये चिन्तितो वभूव। स तु चिन्तयन्नेवेदं नारदमुनिं ददर्श। राजा मुनिचरणौ संस्पृश्य अखण्डराज्यसद्बुद्धिहेतवे आशीर्वादश्च लेभे। रुक्मिण्यपि मातुरादेशानुसारं नारदं प्रणनाम। मुनिस्तां रमामेवामन्यत। रुक्मिणीमकथयच्च नन्दनन्दनः कृष्ण एव ते पतिरतस्तमेव कायेन मनसा भजस्व।

### द्वितीयः सर्गः

आनन्दमग्नां वैदर्भीं मनसा संस्तुत्य भीष्मपूजितो मुनिः कृष्ण-दर्शनेच्छया द्वारवतीं जगाम। तत्र हरिमुवाच 'कुण्डिनपुरादागतोऽस्मि। विदर्भराजतनयां रुक्मिणीं दृष्ट्वा तां तवप्रियां कमलामवगच्छामि।' नारदस्तामुद्वोढुं कृष्णमकथयत् कृष्णोऽपि रुक्मिणीं स्वानुरूपामवगम्य तस्याः पाणिग्रहार्थं मनश्चकार मुनिश्च स्वलोकं जगाम।

### तृतीयः सर्गः

तदारभ्य भैष्मी कृष्णं स्वपतिं मेने। पितरौ सर्वे सुहृत्पुरोहिताश्च बहुचिन्तने कृतेऽपि तत्तुल्यवरं न प्राप्तवन्तः। तदैव माता तान् नारदोक्तं

वसुदेवपुत्रं कृष्णं वररूपेणाकथयत् । तदा भीष्मः मन्त्रिणमुवाच यदहं वैशाखशुक्लाष्टमीतिथौ रुक्मिणीविवाहं कृष्णेन करिष्यामि । श्रुत्वेदं कृष्ण-द्रोही रुक्मी क्रोधाविष्टः सन् पित्रोर्वचनं भङ्क्त्वा सर्वाननादृत्य शिशुपालमेव स्वसुः पतिरूपेण सङ्घुष्य स्वयमेव पत्रं लिलेख । शिशुपालं वरयितुं ब्राह्मणानप्रेषयत् ।

## चतुर्थः सर्गः

भ्रातुर्निर्णयं श्रुत्वा रुक्मिणी भृशं दुःखितापि नारदवचनं संस्मृत्य प्राणान्न तत्याज । सा तु चैद्येन सह विवाहापेक्षया मरणं श्रेयस्करं मेने । इदं चिन्तयन्त्येव सुप्ता सा स्वप्ने दृष्टान् गर्गादिमुनीनपृच्छत् । तेऽकथयन्यत् कृष्णः गिरिजालये त्वां हरिष्यति । निशान्ते आकाशवाचोऽप्यभवद्यत् कृष्णो ध्रुवमेव त्वां हरिष्यति । तदैवागतं कञ्चिद्द्विजवरं प्रणम्य रुक्मिणी सर्वं निवेद्य समये कृष्णमानेतुं प्रार्थयामास । आत्मानमुद्वोढुं कृष्णानयन-विषये समाश्वस्ता च । तस्याः नाममुद्राङ्कितं दृगश्रुसिक्तं पत्रं गृहीत्वा विप्रः द्वारकामगमत् ।

## पञ्चमः सर्गः

सुसज्जितां मनोहरां द्वारकां दृष्ट्वा विप्रः हृष्टः । कृष्णोऽति-दूरादागतं ब्राह्मणं प्रणम्य सिंहासनमुपवेश्य विधिवत्सत्कृत्यागमनप्रयोजनं पप्रच्छ च । द्विजवरः भीष्मजावृत्तं संश्राव्य तत्प्रदत्तं प्रेमाङ्काङ्कितपत्रमेकान्ते कृष्णाय ददौ । कृष्णस्तु स्वचित्तहरीं तत्पत्रीं पठितुं नाशक्नोत् प्रेमाश्रुसिक्त-त्वात्तदा स द्विजवरमेव श्रावयितुमाह । कृष्णाज्ञया द्विजेशः तां शुभपत्रीं श्रावयितुं प्रारभत् ।

## षष्ठः सर्गः

'श्रीमत्कृष्णचन्द्रस्य चरणयोर्मे प्रणामोऽस्तु । भवच्चरणदर्शने कृते एवास्मत्कुशलं भविष्यति । आगत्य मां स्वभार्यां विधेहि येन त्वदंश रूपामिमां चैद्यो मा स्पृशतु । वीर्यशुल्कां मां बलादुपयमतु । अतो बन्धून-हत्वात्मोपयमस्योपायं वदामि । विवाहात् पूर्वेद्युरस्मत्कुलदेवतायाः महा-यात्रा भवति यस्यां नववधूः बहिर्नगराद् गिरिजालयं गच्छति । तत्र मां हर शिशुपालशाल्वजरासुतादिनृपांश्च दण्डयित्वा स्वनगरीं नयतु । भवान् क्षितिभरापनोदनायावतीर्णः सहोदरो मां दुःखाब्धौ निपातयत्यतस्तस्माद्रक्ष । हे कृष्ण अधिकं किं लिखानि सर्वज्ञो भवान् सेवेच्छुरहं त्वच्चरणाब्जौ ।'

तदा ब्राह्मण उवाच—हे यदुवर एते सन्देशा मयोक्ताः अतोऽस्मिन् विषये यत्करणीयं तच्छीघ्रमेव सम्पादय। कृष्णो विप्रं समाश्वास्य तेन सहैव गन्तुं स्वीकृत्य ब्राह्मणमुखाद् भैष्मीविवाहं ज्ञात्वा सारथिं रथमानेतुमादिदेश। दारुकनामा सारथिः शीघ्रमेव रथमानीय दिव्यायुधैः सुसज्ज्य कृष्णं न्यवेदयत्। ब्राह्मणेन सह रथमारुह्य तुरङ्गानां वेगशीलत्वात् क्षपयैकयैव विदर्भानागमत्।

## सप्तमः सर्गः

मनसा कर्मणा वाचा स्वतनयां कृष्णानुरक्तां जानन्नपि पुत्रस्नेहवशाद् भीष्मस्तां शिशुपालाय दातुमुद्दिश्य सादरं सर्वाणि कर्माण्यकारयत्। अथर्ववित्पुरोहिताः माता च भैष्मीं तैलस्पर्शं कर्तुं, नापितकन्यया उद्वर्तनाभ्यञ्जनं कारयितुं, स्नातुं, शीघ्रं गणेशादींश्च पूजयितुमूचुः। शिशुपालेन सहोपयमवार्तया भैष्मी दुःखिताऽभवत्। माता तदा तां क्रोडे निधाय दुःखकारणं पप्रच्छ। तदा पितरौ सहोदराश्च ज्वरयुक्तभैष्म्याश्चिकित्साञ्चक्रुः। रुक्मो च हठपूर्वकं विवाहकृत्यमकारयत्। स्वरक्षकं हरिं स्मरन्तीं विवाहकार्यतो भीतां च पुत्रीमुत्थाप्य माता तैलस्पर्शादिकमकारयत्। उत्सवोऽभवत्। भैष्म्या ऋते कोऽपि जनो दुःखी नासीत्। रुक्मिणी स्वसखीं प्रणम्याकथयद्यत् कश्चिद् द्विजवरमानीय प्रणम्य धनं दत्त्वा मत्पत्युरागमनविषये पृच्छ। एवं सा सर्वं स्वसखीं श्रावयित्वा रुदत्येव दैवतज्ञमकारयत्। आत्मवल्लभश्रीकृष्णविषये रहस्यपृच्छच्च। प्रसन्नो ब्राह्मणोऽवदत्—सुते ! विवाहकाले पतिस्ते आगन्ता। तव पतिः सम्प्रति मार्गे एव वर्तते। रुक्मिणी तस्मै प्रचुरधनं ददौ।

## अष्टमः सर्गः

रुक्मिप्रेषितास्ते विप्रसूताश्चदीशं दमघोषमचकथन् यत् सपुत्रो भीष्मको नृपो भवत्कुशलं पृच्छति। अथ ब्राह्मणाः रुक्मिलिखितां तत्पत्रीं समर्प्य शीघ्रमेव शिशुपालविवाहं कर्त्तुमकथयन्। कृष्णाय प्रदीयमानां रुक्मिणीं तस्मान्निवार्य शिशुपालाय दातुं रुक्मिनिश्चयं च जगदुः। भीष्मो रुक्मिणः पत्रीं दृष्ट्वा सर्वमवगत्य अब्रवीत्—सुतमुद्वक्ष्ये। यर्हि कृष्णो विरुध्यति तर्हि योत्स्ये। अतः ससैन्यबान्धवोऽहं कुण्डिनं गमिष्यामि। सः शुभलग्ने पुत्रतिलकमकारयत्। चेदिपपत्रीं गृहीत्वा दूताः विदर्भानागत्य राज्ञेऽददन्। चेदिपः स्वात्मजमग्रयदत्तिनि समारोह्य कुण्डिनमागमत्।

शिशुपालागमनं श्रुत्वा भैष्मी मुमूर्च्छ प्राणांश्च त्यक्तुं समुदयतिष्ट किन्तु हरीक्षणकाम्यया जीविताऽसीत् । तस्यां क्षपायां पुनस्तस्याः सुखदस्सुरक्षकश्च स्वप्नोऽभूत्—भैष्मि मा भैषीः गिरिजालये कृष्णस्त्वां हरिष्यति ध्रुवमेव । प्रातः माताह—पुत्रि त्वया विवाहकार्ये हठो नैव कर्त्तव्यः । येन भ्रातृवचनं न विनश्येत्तदेव कुरु ।

समित्रबन्धुः विदर्भाधिपः चैद्यमगच्छदपूजयच्च । भीष्मः शिशुपालं विलोक्य स्वपुत्रीं च स्मृत्वा दुःखितो बभूवाचिन्तयच्च नायं शिशुपालोऽस्मत्तनयायोग्यः । कृष्ण एव भैष्मीं हरतु नारदवचनं सत्यं करोतु च । उत्सवे रणं कर्तुं चैद्यसहायको जरासुतः शाल्वादयोऽन्ये सहस्रनृपाश्चागमन् । रुक्मी तेषां निवासस्तस्मिन्नेव गृहेऽकारयत् वृहदुत्सवोऽभवच्च ।

## नवमः सर्गः

खेदातुरान् यदुश्रेष्ठान् राज्ञः वलरामः कृष्णस्य ब्राह्मणेन सहैव कुण्डिनपुरगमनमकथयत् । अथाहूय सेनापतिं वलोऽकथयत्—ससैन्या वयं कृष्णसहायार्थं कुण्डिनं चलामः । ततः कुण्डिनमगमत् । प्रसन्नाः नारदादिऋषयो वलराममूचुः—त्वमद्यैव शत्रून् दण्डयित्वा कृष्णविवाहं कुरु कृष्णश्च समस्तशत्रून् पराजित्य गिरिजालये भैष्मीं हरेत् ।

भवनमध्यस्थिता हरेरागमनं प्रतीक्षमाणा प्रेषितद्विजागमनमपश्यन्ती भीता चिन्तिता रुक्मिणी केवलं कृष्णागमनचिन्तयैव स्वप्राणान्रुरोध । तदैव कृष्णप्रेषितं ब्राह्मणं दृष्ट्वा हर्षेण कृष्णागमनमपृच्छत् । ब्राह्मणः स्वसार्धं कृष्णागमनं सत्यं सत्यमब्रवीत् वाक्यमपि च कृष्णस्याकथयत्—तामानयिष्य इति । ततः ब्राह्मणः रुक्मिणीप्रदत्तशेवधिं गृहीत्वानुमोद्य च स्व गृहमगात् । रुक्मिणी च सखिभिस्सह कृष्णदर्शनेच्छया सौधशिखरं समारुरोह, मनोहरं स्वपतिमपश्यच्च । तदा माता तां जगाद—पुत्रि मां क्षमस्वाद्य परिपूर्णप्रतिज्ञासि । अस्मद्भाग्यचयात् कन्यारूपया त्वया कुलमिदं पवित्रं जातम् ।

## दशमः सर्गः

कृष्णागमनमुपश्रुत्य भयभीतचित्ताः सर्वे राजानः रुक्मिणमगमन् । रुक्मी तयोरुपेक्षां कर्तुमकथयत् · किन्तु भीष्मः रामकृष्णौ गत्वा मङ्गलपाठपूर्वकममूल्यवस्तूनि ताभ्यां ददौ । सः कृष्णं दृष्ट्वा तमेव स्वतनयापतिं मेनेऽचिन्तयच्च यदि कृष्णो मया सम्यगाराधितस्तर्हि कृष्णेनैवाद्य मे पुत्र्या

विवाहो भवतु। तदा तं सम्पूज्य स्वगृहं जगाम। समागतं कृष्णं विज्ञाय सर्वे पुरवासिन आगत्य तं दृष्ट्वाकथयन् यत् कृष्णादृते नैवान्यो रुक्मिणीपतिर्भवितुमर्हति। स्खलिताक्षरा राज्ञी सखीमुवाच—देवर्षिणोक्तवचनं ध्रुवमेव सत्यं भविष्यति। रुक्मी गिरिजापूजनाय शीघ्रं भैष्मीं प्रेषयितुं कथयति किन्तु मागधो एवं कर्तुं निवारयति। रुक्मी गिरिजापूजनं स्वकुलस्य पद्धतिं वदित्वा शाल्वदन्तवक्त्रादींश्च भैष्मीं रक्षितुं निर्दिशति। यदुसेनोपेतः सरामः कृष्णोऽपि गिरिजोपवनं जगाम स। रथस्थ एव प्रतीक्षाञ्चक्रे। गिरिजापूजनोद्यतां स्वपुत्रीं माता जगाद—हे पुत्रि मां क्षमस्व यतो मया त्वदीयकं समुचितं कृत्यं न कृतम्। सखीं पितरौ सुहृदश्च समालिङ्ग्यान्तःपुराद्वीरवरैर्गुप्ता भैष्मीपूजनार्थं निर्जगाम। कृष्णचरणौ स्तुवन्ती मन्दिरमासाद्य शम्भुगिरिजागणेशान् सर्वान् प्रणम्य सा ययाचे—कृष्ण एव मे पतिर्भूयादिति। गौरीप्रहस्याह—अद्यैव मार्गे कृष्णेन ते समागमो भविष्यति। त्वय्यनुरक्तः कृष्णो मार्गे यदुसेनोपेतः समागतोऽतः शीघ्रमेव कृष्णेन सार्धं यदुपुरीं याहि। भैष्मी प्रसादमुपलभ्य मन्दिराद्बहिर्निर्जगाम। तां दृष्ट्वा वीराः कामार्ताः राजानश्च मुमूर्च्छुः, सर्वे रथाश्वगजारोहिणः पृथिव्यां पेतुः। तां स्वरथारोहणमिच्छन्तीं शत्रुभिरीक्ष्यमाण एव कृष्णो हृत्वा यादवैस्सह ययौ।

## एकादशः सर्गः

अथ स्त्रियः कृष्णेन रुक्मिण्या हरणविषये सर्वतो जगदुः। इदं संश्रुत्य सङ्क्रुध्य च ते शाल्वजरासुतादयः कृष्णं प्रत्यधावन्। भयावहो युद्धोऽभवद्रक्तापगाश्च प्रवर्तिताः। रामपराक्रमेण शत्रुगणस्त्रस्तोऽभवत्। हतेषु सेनापतिषु जरासुतादयः चैद्यमुपगम्योचुः—दुर्मनस्यतामिमां त्यज यतो यदिदं तत्सर्वं दैवमायैव। अद्य ते जिग्युः श्वो वयं जेष्यामः। एवं चिन्तितं रुक्मिणं दूतोऽसूचयद्यत् कृष्णेन भैष्मी हृता पराजितश्च राजगणः स्वस्वपुरं जगाम। श्रुत्वेदं क्रुद्धो रुक्मी तदाक्षौहिणीसेनानुगतः कृष्णमनुजगाम। भीष्मो रुक्मिणं बहुधा प्रावोधयत्—स्व स्वसारं कृष्णाय विधिवत् समर्प्य कुलाय सुखं प्रदेहि। तथापि क्रुद्धः सः पितुर्वचनं न श्रुतवान्।

## द्वादशः सर्गः

दुर्मती रुक्मी पितुर्वचनमनादृत्य राज्ञां समक्षं हठेन प्रतिजज्ञे—कृष्णमहत्वा रुक्मिणी चानानीय कुण्डिनं न प्रवेक्ष्यामि। उक्त्वेदं कृष्णमुपाधावीत्। भयावहो युद्धो जातः। हरिस्तस्य सर्वाण्यस्त्राणि शस्त्राणि चिच्छेद।

तदा रथादवप्लुत्य कृष्णं हन्तुमसिना दधाव । कृष्णस्तदपि तिलशश्छित्वा रुक्मिणं हन्तुं खड्गमुपाददे । किन्तु भ्रातृवधभीतायाः स्वपादपतितायाः दैन्ययुतायाः भैष्म्याः प्रार्थनया घातान्निवृत्तोऽभवत् । खड्गेनैव तस्य केशान् श्मश्रूणि मुण्डयन् हास्यास्पदं चकार । संसितकुञ्चितविग्रहं तं मृततुल्यं रामो बन्धनाद्विमोचयन्नाह—भ्रातस्त्वया नोचितं कृतम् पुना रुक्मिणो-मुवाच—न कश्चित् कञ्चिद् दुःखं ददाति, सर्वजनः स्व कर्मभुक् समीक्ष्यते । अतः शोकं परित्यजेति । एवं भैष्मी वैमनस्यं परित्यज्य मनः समादधे । रुक्मी च भोजकटं नामकं महानगरमिदमुदीरयन् निवासं चकार यत् कृष्ण-महत्वा रुक्मिणीं चानानीय कुण्डिनपुरं न प्रवेक्ष्यामि ।

## त्रयोदशः सर्गः

एवं नृपान् विजित्य रुक्मिणीं हृत्वा कृष्णो देवगणाभिपूजितः द्वारवतीं जगाम । पुरीं प्रविशत्येव कृष्णे देवाः पुष्पमालाः ववर्षुः । रामः सर्वान् स्वकीयान्नृपान्निमन्त्रितवान्, ते च कृष्णोपयामदर्शनाभिलाषया आजग्मुः । सपत्नीको भीष्मोऽपि स्वपुत्री कृष्णाय विधिवद् दातुं स्वयमेवागतः । भ्रातृगणोपेतः युधिष्ठरः, कैकेयः, कौरवाः, कुन्तयः, सृञ्जयाश्च सर्वे भूपतयः सस्नेहास्तत्रोपस्थितवन्तः । सर्वे देवा ब्रह्माविष्णुमहेशादयः हरिविवाहावलोकनार्थमाजग्मुः । लग्ने शुभे सपत्नीको भीष्मः कृष्णचरणौ पूज्य विधिवत् स्वतनयां ददौ । अस्मिन् विवाहे श्रीनारदः विदर्भराजस्य कृष्णस्य च गर्गमुनिः पौरोहित्यपदमलञ्चक्रतुः ।

## रुक्मिणीमङ्गलस्य मूलस्रोतांसि

(हरिवंशपुराणम्, विष्णुपुराणम्, ब्रह्मपुराणम्, श्रीमद्भागवतपुराणं च)

रुक्मिणीमङ्गलस्य मूलभूतेषूत्सेषु क्रियमाणे विचारप्रचारे ज्ञायते यद्रुक्मिणीमङ्गलकारः स्वमहाकाव्यस्याधारं हरिवंश-विष्णु-ब्रह्म-श्रीमद्भागवतपुराणेषु वर्णितं श्रीकृष्णद्वारा रुक्मिणीहरणरूपं कथानक-मेवाङ्गीकरोति । एषु समेषु पुराणेषु विदर्भराज्याधिपतेः कुण्डिननगर-स्वामिनो भीष्मकन्यायाः रुक्मिण्या जन्मतः आरभ्य हरणं यावद्वैवाहिकी कथा क्रमेणोपनिबद्धास्ति । इदं त्वन्यद्यत् ब्रह्मविष्णुपुराणयोः कथेयं संक्षिप्ततरेति ।

तत्रादौ पूर्वं प्रोक्तेषु पुराणेषु वर्णितायाः रुक्मिणीहरणकथायाः सारांशः तया सह प्रकृतमहाकाव्योक्तकथायास्तुलनात्मकं विषमतात्मकं चाध्ययनं क्रमेणात्र प्रस्तूयते ।

**रुक्मिणीमङ्गलहरिवंशपुराणयोः रुक्मिणीविवाहे समताविषमता च—**

हरिवंशपुराणस्य विष्णुपर्वणि सप्ताशीत्यष्टाशीतितमाध्ययोः रुक्मिणी-हरणं तत्पाणिग्रहणयोः कथा च वर्णिता । यद्यपि रुक्मिणीमङ्गलहरिवंश-पुराणयोः मूलकथा भीष्मतनयायाः रुक्मिण्या कृष्णे काम्यमानेऽपि तद्भ्रात्रा रुक्मिणा तस्या विवाहः शिशुपालेन सह निश्चिते कृतेऽपि, रुक्मिण्याः इच्छयैव कृष्णेन तस्या अपहरणं पाणिग्रहणं चेत्येव । तथापि द्वयोरधोलिखितवैषम्यमुल्लेखनीयम्—

१. हरिवंश पुराणे (८७।१२) उल्लिखतं यद्विन्ध्याचलस्य दक्षिणे-विदर्भदेशे कुण्डिननगर्याः नृपो भीष्मोऽगस्त्यगोपितेषु प्रदेशेषु राज्यं चकार । तस्य रुक्मस्तनयो रुक्मिणी च तनया वभूवतुः ।

रुक्मिणीमङ्गले विदर्भे कुण्डिनाधिपतेर्भीष्मस्य रुक्मी-रुक्मरथ-रुक्मवाहू-रुक्मकेश-रुक्मालीप्रभृतिपञ्चपुत्राणां रुक्मिण्याश्च पुत्र्याः उल्लेखो विद्यते (१।६) ।

२. हरिवंशपुराणे, रुक्मिणा द्रुमपरशुरामाभ्यामनेकानि दिव्या-स्त्राणि ब्रह्मास्त्राणि च लेभिरे, ततः स कृष्णेन प्रतिपस्पर्धेइत्यपि संकेतः (८७।१३) । रुक्मिणीमङ्गले एषामस्त्राणां रुक्मिणः प्राप्तेर्न उल्लेखः ।

३. हरि० पुराणे केवलमिदमुल्खितं यद्रुक्मिणीकृष्णौ परस्परं गुण-सौन्दर्यौ श्रुत्वानुरक्तौ ।।८७।१४, १५।।

रुक्मिणीमङ्गले (२।१, १४) उभयोर्हृदययोः परस्परानुरागोत्पत्ति-कारणं नारदो देवर्षिः ।

४. हरिवंशे (८७।२४) कथितं यज्जरासन्धः कतिपयपूर्वकारणा-नुरोधेन चेदिपतेर्दमघोषस्याऽभारी आसीदतः स शिशुपालाय भीष्मं रुक्मिणीं ययाचे यच्चभीष्मो स्वीचकार । ८७।२५।।

रुक्मिणीमङ्गले नैवमपितु भीष्मेण भैष्मीं कृष्णेन सहोद्वाहयितुं विचारिते रुक्मी तद्विरुध्य शिशुपालं वररूपेणोद्घोषयति स्वयमेव च पत्रं

विलिख्य प्रभूतधनाभूषणाभ्यां सह ब्राह्मणान् चेदिपं प्रति तत्पुत्रस्य शिशुपाल-स्य रुक्मिण्या विवाहं स्वीकारयितुं प्रेषयति चेदिपो दमघोषः स्वीकरोति च । एवं विवाहप्रस्तावे तस्य स्वीकृतौ च इत्युभयोर्विषमता ।।३।३६, ३७, ३६ ।।

५. हरिवंशे रामकृष्णौ स्वपितृस्वसारं श्रुतश्रवां प्रसादयितुं तत्सुत-स्य शिशुपालस्य विवाहोत्सवे सम्मिलितुं सम्प्रपेदाते । तत्र क्रथकैशिकौ नरेशौ तयोःसुस्वागतं चक्रतुः । ८७।२६, ३० ।

रुक्मिणीमङ्गले श्रीकृष्णस्य पितृष्वसुः संकेतोऽपि न लभ्यते । रुक्मिणी ब्राह्मणेनैकेन पत्रं सम्प्रेष्य स्वयमेव आत्मनो हरणात् कृष्णमनुरुणद्धि तदा कृष्णो विदर्भं समयाति । बलरामोऽपि सह दरस्नेहेन रुक्मिणीहरणे युद्धा-शङ्कया च सेनयोपेतः तत्पश्चात् तत्र प्रपेदे । भीष्मः स्वयमेव तयोः स्वागतं चकार, नात्र क्रथकैशिकयोः काचिद्भूमिका ।

६. हरिवंशपुराणे रुक्मिणीहरणाख्याने रुक्मिण्याः मातुर्न कुत्रापि संकेतः । रुक्मिणीमङ्गले रुक्मिणीमातापि महत्त्वपूर्णभूमिकायामुपनिबद्धा, तद्व्याहृताः संवादा संख्यया अधिका रुक्मिण्यै शिक्षात्मकाश्च ।।

७. हरिवंशे शिशुपालेन रुक्मिण्या विवाहस्योपक्रमः, तस्यामस्य प्रतिक्रिया तया दृष्टमभीष्टस्वप्नम्, आकाशवाणी, गिरिजापूजनमित्यादयो नोपवर्ण्य संक्षिप्तैव मूलकथा ।

रुक्मिणीमङ्गले इदं सर्वं यथोचितमाकर्षकत्वेनोपवर्णितम् ।।

८. हरिवंशे रुक्मिणी विवाहपूर्वं देवीमिन्द्राणीं पूजयति ।।८७।३२।

रुक्मिणीमङ्गले नैकवारं गिरिजापूजनमिति शब्दस्य स्पष्टोल्लेखः ।

९. हरिवंशपुराणे रुक्मिणी शचीं सम्पूज्य यदा मन्दिराद्बहिरेति तत्कालं श्रीकृष्णस्तां प्रतिकामयते रुक्मिणीहरणार्थं च रामादियादवैः सम्परामर्श्य तदा हरति ।८७।३६-४१।

रुक्मिणीमङ्गले रुक्मिणीनिर्देशानुसारं कृष्णस्तां हर्त्तुमेव तत्र समुपैति, रुक्मिणीदर्शनेन अन्यराजगणेषु रक्षकेषु च काममूर्च्छितेषु सत्सु तामप-हरति ।५।१४, १०।६२, ६७ ।।

१०. हरिवंशपुराणेन प्रतीयते यदपहरणकाले रक्षकैः प्रतिषिद्धे बाध्यमाने च कृष्णो रामादियादवेषु युद्धकार्यमारोप्य स्वनगरीं प्रचचाल (८७ ४४)।

रुक्मिणीमङ्गले कृष्णो रुक्मिणीमपहृत्य रामादियादवैः सह यदा द्वारिकां प्रति प्रस्थितस्तदनु राजानो रक्षकाश्च मूर्च्छासमाप्तौ स्त्रीभिः रुक्मिणीहरणवार्तामुपलभ्य कृष्णं हन्तुं कटिबद्धाः धृतास्त्रशस्त्रा दधावुः। मार्गे रामादिभिस्तेषां भयावहः सङ्गरः समजायत ।। ११ सर्गः।

११. हरिवंशे रामादियादवानां जरासन्धशिशुपालदन्तवक्रादि-वीरैस्सह विस्तरेण युद्धवर्णनम् ।।८७।४९-७७।

रुक्मिणीमङ्गले शिशुपालः स्वयं न युद्ध्यते। युद्धवर्णनमपि संक्षिप्तम्, अस्मिन्नन्ये जरासन्धप्रमुखा पराभूयापमानिताश्च शिशुपालमुपागच्छन्ति तं सान्त्वयित्वा समवबोध्य च स्वस्वपुरीं प्रयान्ति। ११।२७ ।।

१२. हरिवंश पुराणे रुक्मी यदा युद्धाय प्रस्थितः तेन सह तस्य सहोदराः क्रथकैशिकादयो, विशालसेना चासीत् ।।८८।३-५।।

रुक्मिणीमङ्गले सः सूतातिरिक्तं न केनापि सह सङ्गराय गच्छति (१२।३)।

१३. रुक्मिणीमङ्गले यदा रुक्मी कृष्णं हन्तुं प्रतिजज्ञे तदा भीष्मस्तं बहुविधं प्रबोधयति अवगमयति निवारयति च। ११।३७-४५।।

हरिवंशपुराणे भीष्मस्य नैकोऽपि संवादः।

१४. हरिवंशे रुक्मिणा संयुद्धय कृष्णे द्वारिकां प्रस्थिते श्रुतर्वामिधो योद्धा तं रथे उपस्थाप्य स्वनगरीं नयति ।।८८।३०।।

रुक्मिणीमङ्गले रुक्मिणः एतादृगवस्थाया नौल्लेखः।

१५. आलोचनात्मकसंस्करणातिरिक्तं हर्विशपुराणे। (परिशिष्टे —

द्वारिकायां कृष्णस्य विवाहोत्सवस्य विधिवद्वर्णनम्। नैकदेशोयो राजानस्त्रत समागच्छन्ति। तान् सर्वान् प्रणम्य तैरुग्रसेनादिभिश्च अनुज्ञातः रुक्मिण्याः पाणिं गृह्णाति। पृष्ठम् (१८९, Vol. II)।

रुक्मिणीमङ्गले सपत्नीको भीष्मो विवाहोत्सवे आगत्य शास्त्रोक्त-विधिना कृष्णाय स्वतनयां रुक्मिणीं प्रदाति सर्वेषां प्रशंसाभाजनं च भवति त्रयोदशः सर्गः । हरिवंशपुराणे नैतादृगुल्लेखः ।

१६. रुक्मिणीमङ्गले विवाहोत्सवे कृष्णस्य पुरोहितपदं गर्गो भीष्मस्य च स्वयमेव नारदः गृह्णाति । त्रयोदशः सर्गः ।

हरिवंशे एतौ द्वौ मुनी रुक्मिणीविवाहाख्याने न कुत्रापि वर्णितौ ।

## विष्णुब्रह्मपुराणयोः रुक्मिणीमङ्गलस्य वैषम्यम्

विष्णुपुराणस्य पञ्चमांशस्य षड्विंशतितमेऽध्याये रुक्मिणीहरणस्य तस्या विवाहस्य च कथा एकादशश्लोकेषूपवर्णिता । एवमेव ब्रह्मपुराणेऽपि शतोत्तरनवतितमे अध्याये कथेयमेकादशश्लोकेष्वेवोपलब्धा । द्वयोर्यद्यपि यत्रतत्र शब्दवैभिन्यं तथापि एक एवार्थः तस्माद्भेदोऽयं लेशमात्रमपि महत्वपूर्णं नास्ति ।

१. रुक्मिणीमङ्गलकाव्ये वर्णितं रुक्मिणीकृष्णयोर्विवाहं कविरस्य बालमुकुन्दभट्टः गान्धर्वविवाहरूपेण प्रास्तौत् । अस्य समुद्घोषः ग्रन्थादावेव चकार कविः । रु० मं० । १।५।।

विष्णुपुराणे रुक्मिणी कृष्णयोर्विवाहो न गान्धर्वविधिनापितु राक्षस-विधिनोल्लिखतः ।। वि० पु० ।५।२६।११।।

२. विष्णुपुराणे केवलं रुक्मिणीकृष्णयोः परस्परमनुराग एव निर्दिष्टः (५।२६।२) ।

रुक्मिणीमङ्गले द्वयोर्मिथोऽनुरागोत्पत्तिकारणं नारदः ।।१।६२, ६३ ।

३. विष्णुपुराणे कृष्णेन याच्यमानेऽपि रुक्मी तस्मै रुक्मिणीं न ददाविति संकेतः ।५।२६।२ ।।

रुक्मिणीमङ्गले कृष्णेन रुक्मिणी न याचिताऽपितु नारदवचनानु-सारेण पत्निसुहृद्गणादिभिः सम्मतो भीष्मो तस्मै स्वयमेव रुक्मिणीं प्रदातुमियेष । तदा रुक्मो विरुणद्धि । ३।१८-४१।।

४. विष्णुपुराणानुसारं जरासन्धो भीष्मं शिशुपालाय रुक्मिणीं प्रदातुं प्रेरितवान् । (५।२६।५)

रुक्मिणीमङ्गले नैवं संकेतोऽपितु रुक्मिणा स्वयमेव शिशुपालाय प्रस्तावः प्रस्तुतः ।३।३४।

५. विष्णुपुराणे वलरामादियादवैस्सह कृष्णः कुण्डिनपुरं शिशुपालस्य विवाहं द्रष्टुं प्रयाति । ५।२६।५ ।

किन्तु रुक्मिणीमङ्गले कृष्णप्रिया रुक्मिणी पत्रं दत्त्वा ब्राह्मणमेकं कृष्णान्तिकं स्वापहरणाय तमानेतुं सम्प्रेषयति । इत्थं रुक्मिण्याः निदेशा-सारं तामपहर्त्तुं कृतनिश्चयः कृष्णः कुण्डिनमेति तदनु वलरामोऽपि तस्या अपहणे भाविनि युद्धमाशङ्क्य यादवैस्सह तत्रोपगच्छति ।८।८-१०

६. रुक्मिणीमङ्गले कृष्णो गिरिजां सम्पूज्य मन्दिराद्बहिरागतां रुक्मिणीं हरति ।१०।५९, ६८ ।

विष्णुपुराणे विवाहात् पूर्वदिवसे रुक्मिण्याः कृष्णेनापहरणमेवो-ल्लिखितः, कुत्रापि गिरिजालयस्य गिरिजापूजनस्य वा संकेतः ।५।२६।६ ॥

विष्णुपुराणेन प्रतीयते यद्रुक्मिणीहरणकाले एव पौण्ड्रकदन्तवक्र-विदूरथशिशुपालादयो नृपाः कृष्णं हन्तुं वहुतरमुद्योगं चक्रुः । किन्तु रामादियादवैः पराजयमवापुः ५।२६।७॥

रुक्मिणीमङ्गले गिरिजापूजनाद्बहिरागतां वरारोहां सुसज्जितां रुक्मिणीं दृष्ट्वा ते कामार्त्ता मूर्च्छिताश्च । पश्चादगनानां कोलाहलेन लब्धचेतनास्ते क्रोधाविष्टाः सन्तः कृष्णमनुजग्मुः भयङ्करसङ्गरान्ते च निर्जितास्सर्वे परावर्तिताश्च । ११ सर्गः ।

८. विष्णुपुराणानुसारेण रुक्मिणीहरणे सञ्जाते शिशुपालोऽपि जरासन्धादिभिरुपेतः यादवैर्युध्यति ।५।२६।७, ८ ॥

किन्तु रुक्मिणीमङ्गले शिशुपालो न स्वयं युद्ध्यते । रामादिर्भिनि-र्जिताश्च जरासन्धादयः शिशुपालमुपगम्य तं नैकधा प्रवोधयन्ति, शोकं विहाय गृहं प्रति परावर्तितुमुपदिशिन्ति च ११।१८, २७ ।

एवमुपरि केवलं विष्णुपुराणेनैव रुक्मिणीमङ्गलस्य वैषम्यं प्रदर्शितम विष्णुब्रह्मपुराणयोरतिसाम्यात् । द्वयोर्यः शब्दगतो भेदोऽपि दृश्यते स तु निम्नलिखितो यथा—

१. रुक्मी तस्याभवत्पुत्रो रुक्मिणी च वरानना । वि० पु० ।।
रुक्मिणी तस्य दुहिता रुक्मी चैव सुतो द्विजाः । ब्रह्म० पु० ।।

२. भीष्मकस्य पुरं जग्मुः शिशुपालप्रियैषिणः ।। वि० पु० ।।
.... .... .... शिशुपालश्च कुण्डिनम् ।। ब्रह्मपुराणम् ।।

एवमेव अभिद्रुत इतिस्थले अनुद्रुत इत्यादयोऽपि । अतः द्वयोरेव शब्दगतभेदेन न किञ्चिदर्थवैभिन्यम् ।

।। रुक्मिणीमङ्गलश्रीमद्भागवतमहापुराणयोः साम्यवैषम्यपरिशीलनम् ।।

श्रीमद्भागवतमहापुराणस्य दशमे स्कन्धे द्विपञ्चाशत्तमाध्यायाद् आचतुष्पञ्चाशें त्रिष्वध्यायेषु भैष्मीविवाहकथा कथिता ।

रुक्मिणीमङ्गलभागवतयो रुक्मिणीहरणविवाहप्रसंगयोः साम्याधिक्येऽपि वैषम्यं दृश्यते । भवतु नामास्य कारणं लघ्वाख्यानकस्यास्य महाकाव्यत्वे प्रस्थापनमेव । अपि च रुक्मिणीमङ्गलकृद्बालमुकुन्दभट्टः सम्भवतः रुक्मिणीकृष्णयो राक्षसविधिनोद्वाहं श्रीकृष्णस्य भगवत्तार्थं प्रतिष्ठार्थं च घातकं मत्वा, लोकेऽस्य दुष्प्रभावमवलोक्य नवीनोचिततरेण गान्धर्वरूपेण व्याख्यातुमियेष च । उल्लेखनीया विषमता अत्र प्रस्तूयन्ते—

१. प्रतीयते यद्भागवतकारो रुक्मिणीकृष्णयोर्विवाहं राक्षसोद्वाहरूपेण वर्णयति, यतोहि स्वयं कथयति यत्—

'निर्मथ्य चैद्यमगधेन्द्र बलं प्रसह्य मां
राक्षसेन विधिनोद्वह वीर्यशुल्काम् ।।१०।५२।४१। श्रीमद्भा०

तस्या भ्राता रुक्म्यपि तस्योद्वाहं राक्षसमेव मनुते यत् कोऽपि न सोढुमर्हति ।

'रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन् स्वसुः ।।१०।५४।१८।।
श्रीमद्भा० परं रुक्मिणीमङ्गलकारेण विवाहोऽयं स्पष्टरूपेण गान्धर्वं उद्घोषितः—

'अन्योन्यभाग्ययोर्भैष्मीकृष्णयोः श्रीशयोरहम् ।
वक्ष्ये गान्धर्वमुद्वाहं रुक्मिणीमङ्गलाभिधम् ।।१।५' । रु० मं०

समुद्घोषस्यास्य ग्रन्थे निर्वाहोऽपि कृतो यतोहि त्रयोदशे सर्गे यदा कृष्णो रुक्मिणीमपहृत्य द्वारिकामुपैति तदा तस्य विवाहोत्सवे सपत्नीको

भीष्मो विधिवत् स्वतनयां रुक्मिणीं कृष्णाय प्रदातुं तत्र समायाति । एवं रुक्मिणी कृष्णयोर्विवाहः परिणामे लोके समादृतः रुक्मिण्याः पित्रानुमोदितश्च । तस्माद्ग्रन्थस्तस्य प्रतिपाद्यं च गौरवमेति ।

श्रीमद्भागवते रुक्मिण्याः पितरौ कन्यादानाय द्वारिकां न प्रयातौ ।

२. रुक्मिणीमङ्गले प्रथम एव सर्गे एकं नवीनं पात्रं नारदो देवर्षिः कविना प्रस्तुतः । ग्रन्थादावेव स्वदुहितुर्वरान्वेषणे चिन्तितो भीष्मो नारदमुपागतं वीक्ष्य तस्यातिथ्यं विदधाति, अथ च रुक्मिणी तच्चरणौ स्पृशति । तदा नारदः आशीर्वचनं निगद्य कृष्णं द्वारिकाधीशं तस्याः पतिरूपेण समुद्घोषयति—

'कृष्णः पतिस्तेऽस्ति सुते रमेश्वरः ।।१।१७। इति

कृष्णं प्रशस्य च रुक्मिणीमुपदिशति यत्—

'भजस्व कायेन तमेव सत्पतिम्' ।। १।६२

ततः प्रभृति रुक्मिणी कृष्णेऽनुरक्ता ।

'इत्थे मुनेर्नन्दकिशोरलीलाः श्रुत्वैव''''''''।
हृदा ययौ कृष्णपदारविन्दं गंगेव सिन्धुं परिपूर्णवेगा ।।२।१।

तृतीय सर्गे तु स्पष्टतरम्—

भैष्मी तदारम्य यदूत्तमाप्तये जग्राह श्रीभागवतान् व्रतान् हृदा ।।३।१

किन्तु श्रीमद्भागवते तस्मिन् प्रसंगे न कुत्रापि नारदः उल्लिखितः न च स रुक्मिणीहृदये कृष्णानुरागकारणमपितु केवलमिदम्—

'सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुणश्रियः ।
गृहागतैर्गीयमाना तं मेने सदृशं पतिम् ।।१०।५२।

३. श्रीमद्भागवते नेदं निर्दिष्टं यत् कृष्णो रुक्मिण्यां कथं कदाप्रभृति चानुरक्त आसीत् ।

रुक्मिणीमङ्गले कृष्णस्य रुक्मिण्यामनुरक्तेस्ताम् उद्वोढुं तस्य दृढनिश्चयस्य च नारद एव प्रमुखत्वेन कारणम्—

'श्रीनारदस्य वचसा कमलां विदर्भ-
राजेन्द्रजां स्वसदृशीमवगम्य कृष्णः ।
तां वोढुनाशु विदधे हृदयं तदाज्ञां सम्प्राप्य'''''''।। २।१४। रु० मं०

४—रुक्मिणीमङ्गले रुक्मी रुक्मिण्याः कृष्णेनोद्वाहस्य नारदवचनानुसारं मातुः प्रस्तावमपि विरुद्ध्य शिशुपालं तस्यः पतिरूपेण समुद्घोषयति। स्वयमेव च विवाहलग्नं विचार्य पत्रमेकं विलिख्य ब्राह्मणान् शिशुपालस्य पितुरन्तिकं फलदानं प्रयच्छ्य विवाहं स्वीकारयितं प्रेषयति ।३।३६,३७,३८

श्रीमद्भागवते रुक्मी केवलं विरुध्य तत्कालं शिशुपालस्य नाम प्रस्तौति, न सपत्रब्राह्मणानां सम्प्रेषणम् ।।१०।५२।२५

५. रुक्मिणीमङ्गले रात्रौ स्वप्ने रुक्मिणी गर्गादिमुनिभिरुच्यते यत् कृष्णो गिरिजालये त्वां हरिष्यति। निशान्ते तथाविधामाकाशवाचमपि शृणोति (४। ६।, ७।) तदा पत्रं दत्त्वा ब्राह्मणं कृष्णान्तिकं प्रेषयति ।

परं भागवते स्वप्नेनाकाशवाचा च न पूर्वाभासस्य संकेतः। नात्र सा कृष्णं पत्रे लिखति, केवलं ब्राह्मणं सर्वामात्मनो व्यथां निगद्य, मौखिकमेव सन्देशं कृष्णाय प्रेष्य तमानेतुं प्रार्थयति ।।१०।५२।४०, ४१ ।

७. रुक्मिणीमङ्गले ब्राह्मणं कृष्णः कथयति यत् पूर्वं भीष्मो मयैव सह भैष्म्युद्वाहं निश्चकार किन्तु तदैव शाल्वजरासन्धशिशुपालादयस्तत्र समागमन्। मद्द्रोही रुक्मी तान् सर्वान् परामृश्य मे विवाहं न्यवारयदिति सर्वमेव जाने। ६।२२-२५।

भागवते तस्मिन् प्रसंगे एवंविधपूर्वकथायाः न कोऽपि संकेतः।

रुक्मिणीमङ्गलानुसारं भीष्मकोऽवगत आसीद्यत्तनया मे मनसा वाचा कर्मणा कृष्णेऽनुरक्ता ।७।१

न भागवते एतादृगुल्लेखः।

८. रुक्मिणीमङ्गले विवाहकाले रुक्मिणी ज्वरयुक्ता सती नैकव्याजं करोति, अतिप्रश्ने मातरं कृष्ण एव मे पतिरिति दृढनिश्चयेन वक्ति। मातापि तामाशीर्वचनेन कथयति यत्ते प्रणमेनं कृष्णो रक्षतु। ८।३१।

भागवते रुक्मिणी केवलं सुशीला चिन्तिता दुःखार्ता च। सा दृढप्रतिज्ञापेक्षया दैवाधीनाधिकं प्रतीयते ।

९. रुक्मिणीमङ्गले रुक्मिणी विवाहकाले एतादृशी व्याकुला यद्दैवज्ञं प्रियसख्या आहूय त कृष्णागमनविषये पृच्छति दैवतज्ञोऽपि भैष्म्याः स्वप्नेऽनुभूतमाकाशवाचा च श्रुतमेव तथ्यं पुनर्वक्ति ।७।३८

भागवते न तत्र दैवज्ञस्य भूमिका ।

१०. रुक्मिणीमङ्गले शिशुपालमागतं श्रुत्वा रुक्मिणी पूर्वं मुमूर्च्छ लब्धसंज्ञा पश्चादसूंस्त्यक्तुं समुद्यता भवति । ८।१९

भागवते धैर्यशीला रुक्मिणी दैवाधीना पूर्णतः स्वप्रेषितब्राह्मणे विश्वस्ता ।

११. यस्मिन् दिने वरयात्रा भीष्मकगृहमुपागमत्तस्यामेव निशायां भैष्म्याः सुखदः सुरक्षकश्च स्वप्नोऽभूद्यस्मिन् पूर्वश्रुतमेवाकाशवाक् पुनरुक्तिमगमत् ।।८।२२

नैवं भागवते प्रदर्शितम्

१२. रुक्मिणीमङ्गले रुक्मिणीमाता अपि प्रामुख्येन चित्रिता तस्या संवादा अपि संख्याधिका भैष्म्यै शिक्षात्मकाश्च ।

भागवते तु तदपहरणप्रसङ्गे मातुर्नामापि न दृश्यते ।

१३. रुक्मिणीमङ्गले भीष्मो यदा वरयात्रास्वागतार्थं तत्रागमत्तदा ह्यशोभनीयं दुहित्रेऽनुपयुक्तं वरं शिशुपालं विलोक्य भृशं शुशोच, अकामयच्च यद् यदि मया विष्णुर्भगवान् सम्यगाराधितस्तर्हि कृष्णो मे तनयां हरेच्चैद्यो भृशं रुदन् स्वनगरीं गच्छेत् च। एवं सोऽस्य परिणामं न चिन्तयति ।। ८।३७,३८।

भागवते नैवं कृत्वा केवलं सुनस्नेहेन स सर्वाण्यकारयद्विविवाहकर्माणि ।१०।५३।७

१४. रुक्मिणीमङ्गले यदा बलो भ्रातृस्नेहप्लुतः कृष्णसहायार्थं प्रयाति, मार्गे नारदादयः शुभमचीकमन्त, भैष्मीमपहृत्य शत्रून् दण्डयितुं चाहुः ।९।१५

भागवते न नारदो न चोपर्युक्तकथनम् ।

१५. रुक्मिणीमङ्गले कुण्डिनमुपागतं कृष्णं यदा रुक्मिणी सौध-

शिखरम रुह्य संदृश्य च प्रहृष्टा भवति तदा माता तां वक्ति—हे पुत्रि मां क्षमस्व, परिपूर्णप्रतिज्ञासि । शुभं च सा पुत्र्यै कामयते ।६।४६

भागवते नैवम् ।

१६. रुक्मिणीमङ्गले जरासन्धः रुक्मिणं गृहे एव भैष्म्या गिरिजा-पूजनं कारयितुमुपदिशति यतोहि स कृष्णेन ह्रियमाणां रुक्मिणीं पूर्वमेवाकल्पयत् ।।१०।३४। परं रुक्म्यकथयद् यत् कुलपद्धतिविरुद्धमेतद् अस्माकं कृते न हितकरम् ।१०।३५

भागवतेऽस्याभावः ।

१७. रुक्मिणीमङ्गले, रुक्मिणीपूजनेन प्रसन्ना गिरिजा स्वयं वक्ति यद्रुक्मिणि ! अद्यैव कृष्णेन मार्गे ते संयोगो भविता । त्वय्यनुरक्तः कृष्णः ससैन्यः समागतः शीघ्रमेव तेन सह यदुपुरीं याहि ।१०।५५, ५६

भागवते किमपि न वदति गिरिजा ।

१८. रुक्मिणीमङ्गले देवपूजनाद्बहिर्निर्गतां भैष्म्याः रूपयौवनं दृष्ट्वा सर्वे राजानो रक्षकाश्च कामार्ताः मूर्च्छिताः । तदैव सख्यस्तां कृष्णं प्रति गन्तुमुपयुक्तं चावसरं जगदुर्यद् भैष्मी अपालयत् । १०।५८-६०

न भागवते सखीनां प्रेरणा न भैष्म्याःस्वयं प्रतिक्रियापितु साकूत-नेत्राभ्यां सा रथमारोढुमभिप्रायं प्रकटयति तदा कृष्णस्तामपहरति । १०।५३,५४

१९. रुक्मिणीमङ्गले रुक्मिणीहरणमुपश्रुत्य सपत्नीको भीष्मो हृष्टः सुहृत् पुरोहिताश्च संतुष्टाः ।११।२

नैवं भागवते ।

२०. रुक्मी 'रुक्मिणीमङ्गले' स्वस्वसृहर्त्तारं कृष्णं हन्तुं यदा प्रयाति तदा तस्य पिता भीष्मस्तमवबोधयितुं निवारयितुं च व्यर्थं यतते ।११।३७-४५।

भागवतेऽस्याभावः ।

२१. रुक्मिणीमङ्गले अनाहूत एव सपत्नीको भीष्मः द्वारिकायां विवाहोत्सवे स्वतनयां विधिवत् कृष्णाय दातुं गच्छति। १३।३१ कथयति च—

> 'गृहाण पुत्रीं मम यादवेन्द्र सर्वात्मना कृष्ण हृदोऽनुरूपाम्।
> ददामि धर्मेण करेण तुभ्यमित्याह भीष्मः प्रणयेन वाचम्॥'

सर्वे जनास्तं पुनः पुनः प्रशंसन्ति।१३।३२

भागवते भीष्मो नैवं विदधाति केवलं केषुचिच्छ्लोकेष्वेव विवाहोत्सवो वर्णितः। तत्र भीष्मस्य नामापि न दृश्यते।१०।५४, ५५-६० परन्तु रुक्मिणीमङ्गलकारः रुक्मिणीकृष्णयोर्विवाहं गौरवास्पदरूपेण प्रस्तोतुं विवाहोत्सवे स्वयमेवोपागतस्य सपत्नीकस्य भीष्मस्यानुमोदनं प्रदर्श्य लोके राक्षसोद्वाहस्य दुष्प्रभावं न्यवारयत्। संभवतः भागवतोपवर्णितं रुक्मिण्याः राक्षसोद्वाहमनुचितं मत्वैव तं समुचिततरं गान्धर्वस्वरूपमददात्। अपि च रुक्मिणीमङ्गलेनेदं प्रतीयते यत् कवेः काले लोके समाजे च राक्षसोद्वाहो न सम्माननीय आसीदतो ग्रन्थोऽयं तात्कालिकलोकस्य प्रतिच्छविरित्यपि मन्ये।

यद्यपि रुक्मिणीमङ्गलस्य विविधपुराणेभ्योऽधिकं श्रीमद्भागवतेनैवातिसाम्यं दृश्यते, तथापि नैकस्थलेषु विचारिते सिद्धयति यद् बालमुकुन्दभट्टः स्वकीये रुक्मिणीमङ्गलकाव्ये श्रीमद्भागवतस्य रुक्मिणीहरणोद्वाहप्रसङ्गादधिकं तथौचित्यपूर्णं वर्णनं चक्रे। एवं पूर्णरूपेण भागवतस्य रुक्म्युद्वाहप्रसङ्गमनुसृत्यापि तमधिकपरिष्कृतं रुचिकरस्वरूपं च दातुं कविना सफलं प्रयतितम्।

इत्थं हरिवंश-विष्णु-ब्रह्म-श्रीमद्भागवत्पुराणैः बालमुकुन्दभट्टस्य अस्य रुक्मिणीमङ्गलस्य तुलनात्मके विषमतात्मके चाध्ययने कृते निष्कर्षोऽयं समुदेति यच्छ्रीमद्भागवतमेव ग्रन्थस्यास्य कवेश्च प्रामुख्येनादर्शः आसीत्। सर्वेष्वेषु रुक्मिणीहरणविवाहयोः एकैव मूलकथा इयन्मात्रमुपलभ्यते। यद्यपि विष्णुब्रह्मपुराणयोस्तु पद्यशः सादृश्यं, तथापि सम्पूर्णकथानके यत्र तत्र ये भेदास्ते उपरि प्रदर्शिताः।

यथा श्रीमद्भागवतेन तुलनात्मकाध्ययप्रसङ्गे निर्देशितम् यद्भागवतमेव प्रकृतग्रन्थस्य मुख्योपजीवकम्, यस्य कारणं संभवतः इदं यद् भागवतोपनिबद्धं रुक्मिणीहरणप्रसङ्गान्तर्गतं सर्वमपि घटनाचक्रं सुरक्षितं निधायैव

कविना स्वकाव्यस्योपबृंहणं कृतम्। यत्र तत्र तु रुक्मिणीमङ्गले भागवतस्य रुक्मिणीहरणविवाहप्रसङ्गे प्रयुक्ताः शब्दाः उपमाश्च तथैव विन्यस्ताः। कतिपयस्थलेषु प्रतीयते यत्तानेव शब्दानपरस्मिन् छन्दसि प्रयुक्तवान् कविः।

अतः एवं पर्यालोचिते रुक्मिणीमङ्गलं प्रति श्रीमद्भागवतमहापुराणस्यैवोपजीवकता सिद्धयति।

## रुक्मिणीमङ्गलस्य भाषा व्याकरणं च

कविवरबालमुकुन्दभट्टविरचितस्य रुक्मिणीमङ्गलाख्यकाव्यस्य भाषा संस्कृतम् यत् खलु अतिसरलं मनोहरं प्रवाहमयं सुललितपदावलीसमेतं वरीवर्ति। कविना भूयांसि पद्यानि उपजातिच्छदसा एव रचितानि सन्ति। छन्द इदं स्वाभावेन सरलं गेयगुणसंवलितं प्रवहणशीलं च भवति। गीतिकावृत्तस्य यत्र कुत्रापि प्रयोगः प्रतीतिपथमायाति तत्र तत्र तस्य पदविन्यासो मनः एतावदाकर्षति यत् पठनवेलायां स स्वयमेव गेयत्वेन प्रतिभाति[१]।

सुललितपदविन्यासयुतं पद्यमिदं रुक्मिण्या कृष्णाय लिखितायाः पत्रियायाः अस्ति। अस्या प्रेमपत्रिकायाः कविना वर्णनमेवंविधिना विहितं—

आकर्षणीं रश्मिमिवात्मनों हरेः ।।५।२५

अतएव कविना पत्रीरचनायामाकर्षिका सरसपदावली प्रयुक्ता। एवमेव मनोदशायाः मार्मिकं चित्रं चित्रयितुं समुचितशब्दावलीनां प्रयोगः सहृदयहृदयहारी चमत्कारी च।

अखिलेऽस्मिन्काव्ये प्राधान्येन वैदर्भीरीतिराश्रिता, तथा च प्रसादगुणगुम्फनात् पाठकानाम् अर्थावबोधे निरर्थकः आयासः नहि भवतीति प्रसादगुणस्य अयमेव लक्षणमहिमा[२]।

प्रस्तुतेस्मिन् काव्ये गुणोऽयं सर्वत प्रसृतो द्रष्टव्यः।

---

१. रु० मं० ६।१३।

२. सा० द० ८।७, ८।

एकमेवोदाहरणमत्र दीयते—

> सूक्ष्मालकावृतमुखाब्जमनोहरश्रीः
> शार्दूलदिव्यनखभूषितरत्नमालः ।
> काञ्चीविराजितकटिर्वरनूपुराङ्घ्रि-
> र्गोपीमनो हरति जानुकरैश्चलन् यः ।।

यद्यपि उपर्युक्तेऽस्मिन् पद्ये नास्ति समस्तपदानां सर्वथाभावः तथापि तेषु समस्तपदेषु कठोरव्यञ्जनानां कर्णकटुदोषदुष्टानां वर्णानां च सर्वथा अभावात् क्लिष्टसमासविरहत्वेन च नास्ति प्रसादेतरगुणशंकालेशोऽपि। तेषु समस्तपदेषु हि कर्णप्रियशब्दावलीच्छटा विच्छुरति येन श्रुतिमात्रेण भवत्यर्थसम्प्रत्ययः । एवञ्च काव्येऽस्मिन् केनापि प्रकारेण प्रसादगुणो न खलु हीयते । इत्थमेवात्र अन्यत्र वा पद्येषु समाश्रिता खलु वैदर्भी रीतिरायास-लब्धान्दोषानपि अपमृज्य कथावशेषं करोति । वैदर्भीलक्षणं साहित्यदर्पण-कारेणैवं लक्षितम्—

> माधुर्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका ।
> अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरिष्यते ।। सा० द० ९।२

रीतिरियं तेषु स्थलेषु विशेषतयोपलभ्यते यत्र च शृङ्गाररस उपवर्ण्यते । निखिलेऽस्मिन्काव्ये गौडीरीतेः प्रायोऽभावो दृश्यते । एवञ्च वैदर्भीरीतेरति-रिक्ताया अन्यस्याः कस्याश्चिद्रीतेर्भवति आभासश्चेत्तर्हि पाञ्चाली-लाटीरीत्योरेव । यत्र च भवति प्रसादगुणस्तत्र वैदर्भीरीतिरेव तस्योप-स्करोति, अतः काव्येऽस्मिन् वैदर्भीरीतिः प्रसादगुणश्च इत्युभावपि काव्यमिदं सहृदयहृदयहारिपरिस्पन्दसुन्दरमभिवर्धयतः ।

काव्येस्मिन्निदमेव भाषावैशिष्ट्यं यदस्मिन् प्रसादगुणः स्वा-साङ्गोपाङ्गलक्षणेन चमत्कारितया जाघटीति । एवञ्च प्रतिफलमिदं यद् यदि कुत्रापि रौद्रः[1] वीररसो[2] वा प्रसज्जति तत्रापि तद्व्यञ्जकः ओजगुणो गौडीरीतिश्च न प्रयुञ्ज्येते एव ।

अनयोर्द्वयोरपि न तु समस्तपदानिञ्ज्येते । प्रयुक्तानि न कठोरतम-व्यञ्जनानि प्रत्युत शीघ्रार्थप्रत्यायकानि सरलपदान्येन गुम्फितानि यानि

---

१. रु० मं० ११।४६ ।
२. रु० मं० ११।५ ।

प्रसादगुणानुकूलानि सन्ति। एवमेवाद्भुतरसे (१।२४) भयानके (११।१०-१४), हास्यादि (१२।२१) रसेष्वपि प्रसादगुणोपलब्धिः सुकरतया भवति।

यत्र कुत्रचित् शृङ्गाररसप्रसङ्गे माधुर्यगुणोऽपिमिलति यथा १०।६६।

> मन्दं मन्दं हि भैष्मी जलजलजपदा चालयत्यात्मभर्तुः
> कृष्णस्यानन्दमूर्तेः परमभगवतः प्राप्तिमन्वेषमाणा।
> केशानुत्सार्य वामैररुणकररुहैरक्षतापाङ्गतस्तान्
> भूपान् प्राप्तान् ह्रिमासादितनिजहरणायोद्यतं तं ददर्श॥

पद्येऽस्मिन् काव्यप्रकाश कर्त्तुःलक्षणानुसारेण[1], ट, ठ, ड, ढ वर्णान् वर्जयित्वा कादयो मावसानाः स्पर्शाख्याः वर्णाः स्वस्वान्तिमवर्णैःस्सह सुप्रयुक्तास्सन्ति। इत्थमेव प्रोक्तेऽस्मिन् पद्ये यत्र तत्र प्रयुक्ता अनुस्वारादयो समस्त शब्दाश्च माधुर्यगुणं व्यञ्जन्तितराम्। एवमेव क्वचित् क्वचिद्वि-प्रलम्भशृङ्गारवर्णनप्रसङ्गेऽपि गुणोऽयंमाधुर्याख्यः परिलक्ष्यते। ओजस्तु तावत् पूर्वकथनानुसारेण प्रायो भावकोटिमेवालिङ्गते। एवञ्च सम्पूर्णेऽस्मिन्महाकाव्ये समेषां रसानां व्यञ्जकश्चारुचमत्कारकारकः प्रसादगुणः समस्तगुणवर्तिनी वैदर्भीरीतिरेव प्रयुक्ता वरीवर्ति।

कविना नहि तावत्कलापक्षः सातिशयं तथाऽध्यायि यथा च भावपक्षः, इदमेव कारणं काव्ये सरलतायाः स्पष्टतायाश्च। सर्वविदितं यत् कलापक्षे न्यस्ते समादरे ग्रन्थजटिलता दुरूहता च समापतति यथा माघश्रीहर्षादिकविपुङ्गवानां काव्येषु सुस्पष्टमनुभूयते। वस्तुतः कविनानेन कस्मिंश्चिदपि पक्षे बुद्धिविलासव्युत्पत्तिमप्रदर्श्य वर्णनप्रसङ्गेषु स्वतः समागता स्वाभाविकी कोमलकान्तपदावली एव प्रादायि। मार्मिकस्थलेषु कविः मर्मस्पर्शिनीं भाषां तथाविधानि पदानि च प्रयुनक्ति। एतादृशं मार्मिकं स्थलं रुक्मिण्यास्तन्मातुश्च संवादप्रसङ्गे विशेषतया द्रष्टुं शक्यते। रुक्मिणीलिखितपत्रिकायामपि षष्ठे सर्गे, रुक्मिणी-दूतसंवादे (४।१६-२९), अथ च रुक्मिणीविलापप्रसङ्गे च सहृदयहृदयजनैः करुणाभरभरितैः सम्यगवलोकयितुं शक्यते।

सप्तमे सर्गे दुःखाक्रान्तामस्वस्थचित्तां मलिनां दीनां च रुक्मिणीं प्रेक्ष्य तन्माता यदुक्तवती, ताः पङ्क्तयोऽवलोकनीयाः[2]।

---

१. का० प्र० ८।७४।
२. रु० मं० ७।१५, १६।

अष्टमेऽपि सर्गे भैष्मीजननी शिशुपालेन सह विवाहायानुवेलं सज्जितुं रुक्मिणीं ब्रवीति । श्रुत्वा च मातुर्वचनं पूर्वं तु रुक्मिणी मर्यादां प्रतिपालयति परं असह्ये जाते सा परुषाक्षरेपूत्तरं ददाति[1] ।

एषु समेष्वपि पद्येषु लोकव्यवहृतसामान्यभाषैवावलम्बिता दरीदृश्यते । किञ्च तत्र प्रयुक्ता लोकोक्तयोऽद्यापि अनेकासु भाषासु अतिशयेन प्रचलन्ति तद्यथा—

'भवतीं शपामि', हृदयक्षते सहजैः कृते लवणं ददासि पुनः पुनः ।।

वचनं दहेज्जवलनो मुखे पतत्वनिशं पविरादयः ।'

इत्थमेवास्य काव्यस्य कस्यचिदपि स्थलस्य दर्शनेन तत्कालीनः प्रचलितः स्वाभाविको व्यवहारः स्वयमेव स्मृतिपथमारोहति । एवञ्च कविवरस्यास्य सहजशब्दस्तोमेन सजीवभाषया च भावनात्मकः प्रसङ्गो बलादन्तस्तलं गभीरं स्पृशति ।

यद्यपि रुक्मिणी स्वभ्रातुः रुक्मव्यवहारेण सातिशयखेदक्लान्ता शिशुपालेनोद्वहश्च परित्यज्य कृष्णं वृणुते, तथापि सङ्गरे यदा तत्प्रियो भगवान् कृष्णो रुक्मिवधार्थं यतते तदा रुक्मिण्याः सहजकोमलं नारीहृदयं द्रवीभूतं सत् सकलं परिवेशमावृणोति । तदा सा भ्रातुः वधाशङ्कातः भयाक्रान्ता उद्भूतसहजस्नेहा च जायते यत्किल भगिन्या स्वसहोदरं प्रति स्वाभाविकं भवति । तदानीं कृष्णं प्रार्थयति[2] ।

पद्येऽस्मिन्नस्मात्पूर्ववर्तिष्वपि केषुचित्पदेषु नारीजनस्य विशेषतया भगिन्याः भावनानां मनोवैज्ञानिकसरण्या स्पष्टाभिव्यक्तौ कवेरस्य भाषा हृदयावर्जिका सफला च वर्ततेतराम्, नात्र संशीतिलेशमपि । एवञ्चास्यकवेः भाषायाः भावपक्षोऽतीव सजीवश्चित्रप्रधानः सहृदयहृदयहारि परिस्पन्दसुन्दरश्चास्ति । मन्ये कविना न पद्यं व्यरचि प्रत्युच्चित्रमेवालेखि ।

कविवरस्यास्माकं काव्येऽस्मिन् व्याकरणसंबन्धीनि नैकानि स्खलितानि दृष्टिगतानि भवन्ति । तानि सन्धिसमाससुवन्ततिडन्तस्त्रीप्रत्ययादिगतानि बहुविधानि काव्ये प्रयुक्तानि यानि चिन्त्यानि, तानि तत्र विभागशः समुद्धृत्य प्रायः विवेचनकोटिमानीयन्ते—

---

१. रु० मं० ८।२७ ।

२. रु० मं० १२।१५ ।

## सन्धिप्रयोगाः

अथ केचन सन्धिप्रयोगाः प्रस्तूयन्ते। एषु सर्वेषु प्रयोगेषु कविः स्वच्छन्दतामावहति। द्रष्टव्यमत्र यथा—

१. गच्छन्त्याद्रिसुतागृहात् १०।४७ (गच्छन्त्याः + अद्रि—)

२. लीनाथ १०।७० (लीनाः + अथ)

३. चन्द्रमाभूत् १३।४२ (चन्द्रमाः + अभूत्)

उपरिलिखितेषु प्रयोगेषु वामभागे कविकृतप्रयोगा दक्षिणभागे तु तेषां विग्रहः इत्यनेन तेषां विवेचने सौकर्यवशात्।

प्रयोगेषु 'भो भगो अघो अपूर्वस्य योऽशि ८।३।१७' इति सूत्रेण यादेशे ततः 'लोपः शाकल्यस्य ८।३।१९, इत्यनेन यकारस्य वैकल्पिकलोपे कृते' 'अकः सवर्णे दीर्घः ६।१।१०१ सूत्रेण दीर्घप्राप्ते सति पूर्वत्रासिद्धम् ८.२।२१, द्वारा त्रिपादीयलोपोऽसिद्धः फलतः यकारस्य व्यवधानवशात् सवर्णदीर्घो न भविष्यति। एषु सर्वेषु विवृत्तिभावः स्पष्ट एव।

४. सस्त्रिभुवनवनितासुन्दरी (१०।१५)।

अस्मिन्प्रयोगे 'एतत्तदोःसुलोपोऽकोरनञ् समासे हलि। ६।१।१३२, सूत्रेण विसर्गस्य सवर्णोत्तरस्य लोपः स्यात्।

५. एवं सः परमेष्ठिना (५।२२) इत्यत्र विसर्गलोपे सति छन्दोभङ्गो भविष्यति अतोऽत्र कविनैवाशुद्धः प्रयोगो विहितः यतो यदि श्लोके 'सोऽचि लोपे चेत् पादपूरणम्' ।६।१।१३४ इति सूत्रेण विसर्गलोपो विधीयते, तत्तु केवलमचि परे एव। विसर्गलोपाभावस्य श्लोके नास्त्येव नियमः। 'हलि सर्वेषाम् ८.३।२२, इत्यनेन हलि परे सर्वदैव लोपः।

६. हृदेश (१।१९)।

अत्र हृदयस्य 'हृल्लेख यदण्लासेषु ८।३।५०, एतद्सूत्रानुशीलनेन ईशशब्दे परे हृदयस्य हृदादेश एव न भवति तस्मात् हृदयेश इति पदमेव पाणिनीयम्। हृदेशः इति त्वपाणिनीयम्। अथ च 'स्वान्तं हृन्मानसं

मनः ।१।५।३१, इत्यमरकोषमतानुसारेण यदि हृद् शब्दः पृथक् मन्यते तदपि हृदीशः इत्येवं रूपं स्यात् ।

७. यदिहया (५।२१) (यत्+ईहया)

ईहाशब्दो दीर्घईकारादिः प्रथितः किन्तु कविना इहा शब्दः प्रयुक्तः यो व्याकरणकाव्यकोशादावप्रयुज्यमानत्वादशुद्ध एव । किन्तु छन्दोदृष्ट्यात्र ह्रस्वेकारादेरेवावश्यकता । लोके उक्तिरपि प्रसिद्धा—"अपि माषस्य मषं कुर्याच्छन्दोभङ्गं न कुर्यात्" तदेवानुसृता कविना ।

८. भङ्क्त्वा कुक्षिमथो मरिष्य अथवा (४ ३) (मरिष्ये+अथवा) 'एङः पदान्तादति ६।१।१०९' इति सूत्रेण पदान्तेकारात्परस्य पररूपत्वे मरिष्येऽथवा इति रूपं भाव्यं । परन्तु सन्धिविषयकाज्ञानात्कविना विसन्धिः कृतः ।

## कृदन्तप्रयोगाः

९. प्रतीक्ष्यन् ११।२८ (प्रतीक्ष्यमाण इत्यस्य) ।

१०. असहन् ११।३६ (असहमान इत्यस्य) ।

अत्र 'लटः शतृशानचावप्रथमा समानाधिकरणे ३।२।१२४, इति सूत्रेण विधीयमानौ शतृशानचौ क्रमेण परस्मैपदात्मनेपदसंज्ञकौ । तथाहि सूत्रं 'तङानावात्मने पदम्' । १।४।१००। अतः ईक्ष् सह् धातुभ्यामात्मनेपदनिमित्ताभ्यां शानच् प्रत्यय एव विधातव्यः अतः प्रतीक्ष्यमाणः असहमान इति रूपमेव व्याकरणसम्मतं कविनाज्ञानाद्भ्रमाद्वा शतृप्रत्ययेन प्रतीक्ष्यन्नसहन्नित्यादिरूपाणि निष्पादितानि ।

११. शोचम् (९।४२) इत्यत्र (शुच + घञ् भावे)' च जोः कुः घिण्यतो ७।३।५२, सूत्रेण कुत्वविधानात् शोकमिति घञन्तंरूपं साधु । किन्तु शुच् शब्देनाच् प्रत्यये कृते शोच इत्यकारान्तमेव रूपं भविष्यति । तथाप्यचः आकृतिगणत्वादप्रयुक्तत्वदोषदुष्टोऽयम् ।

१२ वाचितुम् ५।२३

वच् परिभाषणे इत्यस्माद्धातोरदादिगण पठितात् तुमुनि वक्तुमिति रूपं जायते । चुरादिगणपठितात्तु णिचि उपधावृद्धौ तुमुनि इति सति वाचयितुमिति परिनिष्ठितं सिद्धयति । अतो वाचितुं रूपमशुद्धमेव ।

वाचं करोति तथाऽचष्टे वा इत्यर्थे वाच् शब्दात्क्विपि सर्वापहारि लोपे धातुत्वात् वाच् इत्यस्मान्नामधातोः तुमुनि इटि सति वाचितुमिति रूपं भवितुमर्हति किन्तु दुर्लभोऽयं प्रयोगः।

**क्त्वा प्रत्ययस्तस्यल्यबादेशश्च**

१३. सम्पूजयित्वा १।४८

अत्र समानकर्तृकयोः पूर्वकाले क्त्वा ३।४।२१, इति सूत्रेण धातोर्विधीयमानस्य क्त्वा प्रत्ययस्य 'समासे न पूर्वः क्त्वो ल्यप् ७।१।३७, इति सूत्रेण ल्यबादेशविधानात् सम्पूज्य इत्येव रूपं साधु। सम्पूजयित्वा इति रूपं सर्वथा अज्ञानविलसितम्। सोपसर्गस्य क्त्वः प्रयोगो दुर्लभ एव। यतः कविना सम्पूज्य २।८, इत्यपि साधु रूपं प्रयुक्तमतः सर्वमेतत् छन्दोऽर्थमेव कृतमिति प्रतिभाति।

१४. श्रुत्य (३।१५), (४।८) अर्प्यनम (७।३४), इत्यादिष्वेवमेव अनञ् समासाभावे असमासे वाक्त्वो ल्यप् न साधु किन्तु तदापि ल्यवादेशविधिरकारि कविना, सोऽपाणिनीय एव। यद्यपि प्रयोगा एते पाणिनिव्याकरणानुसारेण न भवितुमर्हन्ति तथापि 'नामिसाधुः' रुद्रटस्य काव्यालङ्कारव्याख्यायां पाणिनेरेव स्वव्याकरणनियमेन सह विरोधं निर्दिशति। 'पाणिनेः पातालविजये महाकाव्ये सन्ध्यावधूं गृह्य करेणेत्यत्र गृह्येति क्त्वो ल्यवादेशस्तर्हि कवेरस्य किम्।

## तिङन्तप्रयोगाः

१५. निवेदयत् ५।२२, इति रूपं न्यवेदयदित्यस्य स्थाने। यतो नि उपसर्गाद्विधातोर्लङि धातोः पूर्वमडागमे सति न्यवेदयदिति रूपं साधु। परन्त्वत्राभावोऽनियमात्कृतः। अपाणिनीयमिदं छन्दोऽर्थमेव प्रयुक्तम्।

१६. विदधे १३।४१

'गर्गादतोविप्रगणा हि शाखोच्चारं समन्ताद्विदधे विवाहे' इत्यस्मिन् पङ्क्तौ विदधे इति रूपं कर्तृर्बहुत्वान्न युज्यते। अतोऽत्र विदधिरे इति वहुवचनरूपप्रयुक्तत्वादात्मने पदे छन्दो भङ्गो भवितुं शक्नोति किन्तु परस्मैपदे विदधुरिति रूपेण न छन्दो भङ्गो भवितुमर्हति, तदापि कविना नावधानमत्र दत्तम्।

१७. आस (१३।४९, ५०, ५४)

एवम् आस इति शब्दो बभूवेत्यर्थे नैकधा प्रयुक्तो वर्तते ।

धातुपाठे त्रयः अस् धातवः पठितास्तत्र एकः भ्वादिगणीयो गति-दीप्त्यादानेष्वर्थेषु उपदिष्टः द्वितीयश्च भ्वादिगणीयः सत्तार्थे प्रोक्तः । यस्य च सार्वधातुकलकारेष्वेव रूपाणि प्रयुज्यन्ते, अन्यत्र लकारेषु तत्र भू-भावो भवति 'अस्तेर्भूः (२।४।५२) इति पाणिनीयानुशासनात् । तृतीयश्च दिवादिगणो पठितः असु प्रक्षेपणे इति । एषु अदादिगणीयस्यास्धातोः आस इति रूपं न भवितुमर्हति, तत्र बभूव इति रूपस्य प्रसिद्धत्वात् । दिवादिगणे पठितस्यास्धातोरपि नेदं रूपम्, अस्य अर्थविरोधात् । अतः परिशेषाद्भ्वादिगणीयस्यैवास् धातोः रूपमिदं वक्तुं शक्यते तस्य त्रयोऽर्थाः तत्र प्रकरणादिना दीप्त्यर्थग्रहणे क्षतिविरहः । अथवा परम्परया चतुःषु लकारेष्वेव प्रयुज्यमानस्यास् भुवि इति धातोरेव परोक्षे लिटि आस इति अपाणिनीयः प्रयोगो वक्तव्यः, इति भाषावैज्ञानिकानां विषयः । तस्मात् १३।४९, ५० इति श्लोकेषु आस शब्दः ख्यातनामा बभूवेत्यर्थं बोधयति ।

## समासप्रयोगोऽत्र दर्शनीयः

१८. अम्ब सुते १०।४।

आसिञ्चती स्नेहजलेन तच्छिरं
मुहुर्गृणन्त्यम्ब सुते ममानयम् ।
क्षमस्व यस्मान्न मया त्वदीयकं
कृत्यं कृतं दीनतरा ततोऽस्म्यहम् ११।४१।

अम्बसुते इति शब्दोऽस्मिन् श्लोके रुक्मिण्याः सम्बोधनार्थं मात्रा प्रयुक्तम् । अम्बसुते इत्यत्र 'अम्बा चासौ सुता च' इति विग्रहे कर्मधारय-स्तथा च बहुलतया 'ङ्यापो सञ्ज्ञा छन्दसोर्बहुलम् ६।३।६३, इति सूत्रेण ह्रस्वं विधाय अम्बसुते इति पदं सम्बोधने निष्पादितमत्रेदं भावमवधेयम् । अम्बसुताशब्दस्य वैदिकप्रयोगाभावात् संज्ञारूढित्वाच्च' ङ्यापो संज्ञया छन्दसोर्बहुलम् । ।३।६३. इति सूत्रेण ह्रस्वविधानमपाणिनीयम् । अथ च पुत्रीविशेषेण अम्बाशब्दस्य प्रयोगोऽपि न चमत्कारी, पुनरपि उपस्थितस्य गतिश्चिन्तनीयेति मनसि कृत्वा उच्यते यल्लोके सुता दुर्गारूपेण मन्यते,

किञ्च सा रुक्मिणी साक्षाज्जगज्जननी पराम्बा एवातो विशेषणत्वेनात्र अम्बा शब्दप्रयोग औचित्यशिखामालम्बते ।

## स्त्रीप्रत्ययप्रयोगाः

१९. तडिताम्बरम् (४।१०)

पाणिनिव्याकरणानुसारेण तडिच्छब्दः तकारान्त एव । अतः तडित्+अम्बरम् इति शब्दद्वयस्य सन्धौ पर्यवसिते तडिदम्बरमिति रूपं भाव्यम् । किन्तु—

'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥'

एतन्नियमानुसारेण भागुरिमते स्त्रीलिङ्गे आबन्ततडिता इति रूपं विधातुं शक्यम् । परन्तु काव्यकोशादौ मृग्यम् ।

२०. अपश्यतीष्टम् (९।३४)

ये मां श्रियं वै प्रणमन्ति लोके
ते सर्वसम्पन्निलया भवन्ति ।
श्रियां नतायां मयि किं पुनर्हि
तस्मै ननामान्यमपश्यतीष्टम् ।।९।३३।।

इत्यस्मिन् श्लोके 'अपश्यती' प्रयोगे शप् श्यनोर्नित्यम् ७।१।८, इति सूत्रेण नुमागमः 'ती' इत्यस्य पूर्वं भूत्वा अपश्यन्तीति साधु रूपं स्यात् । एवमत्र कविना उपर्युक्तस्य नुमागमविधायकस्य सूत्रस्योल्लघनं कृतं ।

किन्त्वेतादृक् प्रयोगः पाणिनेरपि नामिसाधुः रुद्रस्य काव्यालंकार-व्याख्यायामुद्धरति ।—

'गतेऽर्धरात्रे परिमन्दमन्दं
गर्जन्ति यत्प्रावृटि कालमेघाः ।।
अपश्यती वत्समिन्दुविम्बं
तच्छर्वरी गौरिव हुङ्करोति ।।पातालविजयम् ।'

अत्रापश्यती प्रयोगे 'ती' इत्यस्य पूर्वं न् कारं स्यादेव ।

२१. रुदन्ती १०।४२

रुदन्ती इति प्रयोगोऽपाणिनीयश्चाशुद्धो यतो रुद्धातोः शतृप्रत्यये कृते अङ्गस्य अवर्णान्तत्वाभावाद् 'आच्छीनद्योर्नुम् ७।१।८० इति वैकल्पिकस्यापि नुमोऽप्राप्त्या रुदती इत्येव स्त्रीलिङ्गरूपं स्यात्। परन्त्वत्र कविना प्रमादादज्ञानाद्वा नुम् विहितम् इति।

## लिङ्गवैचित्र्यम्

२२. शिरो नतोऽभवत् ९।४

'मारैरनन्तस्य शिरो नतोऽभवद्भूमिर्भृशं कम्पमवाप तत्क्षणे।
यानस्थिता देवगणाः मुदान्विता जयेति वाचं मुहुरूचिरे तदा ॥९।१३॥

अत्र नपुंसकलिङ्गस्य सकारान्तस्य शिरस् शब्दस्य पुंलिङ्गप्रयोगो लोकविरुद्ध एव। यदि चाकारान्तः शिर इति शब्दोऽङ्गीक्रियते तर्हि तदपि नपुंसकलिङ्ग एव। तथा सति शिरः नतमेव स्यात्।

२३. दृशिति स्त्रीलिङ्गशब्दस्य प्रथम इति पुलिङ्गशब्देन सह प्रयोगः[1]। इत्यस्मिन् श्लोके उपरिष्टाद्विशेष्यभूतः।

दृश् शब्दः स्त्रीलिङ्गः तत्परामर्शके सर्वनामसंज्ञके प्रथमशब्दे च स्त्रीलिङ्गेनैव भाव्यम्। अतः प्रथमः परः इति लिङ्गदोषग्रस्तःअत्र, प्रथमा परा' इति रूपं स्यात्।

## अप्रयुक्तत्वदोषग्रस्ताः शब्दाः

१. एवं मामिति शब्दः रुक्मिण्या विशेषणरूपेण[2] प्रयुक्तः। 'मा' इति शब्दस्य शब्दकल्पद्रुमे लक्ष्मीरित्यर्थो मिलति। शब्दकल्पद्रुमकारेण तत्र 'मापतिर्विष्णुरिति युक्तः। परन्तु न केवलं पुराणादिष्वेव रुक्मिणीमधिकृत्य काव्येष्वपि मा शब्दो रुक्मिण्या विशेषणरूपेण दुर्लभ एव।

२. मनोऽर्थभङ्गं ४।१८, मनोऽर्थं ११४६ इत्यादिस्थले प्रयुक्तः

---

१. रु० मं० ८।२१।

२. रु० मं० २।२।

मनोऽर्थशब्दः मनोरथ इत्यस्यार्थस्य वाचको यद्यपि साधु तथापि काव्यादिष्वप्रयुक्तत्वाद्दुर्लभः।

एतदतिरिक्तं कविनास्मिन् काव्ये बाहुल्येन 'क' प्रत्ययस्य प्रयोगो विहितः यथा—कपित्थकानां १।३८, कुमारकैः १।३९, वत्सकान् १।४८, निशीथके १।५१, खण्डकेन १।५५, दर्पणादिकान् २।८, तक्रादिकेन ३।२२, योग्यकाः ३।२९, सरामकः ३।३३, कराङ्घ्रिकम् ४।१०, अधीशकः ४।१२, माल्यकैः ५।१५, दासिकाम् ६।१४, इत्यादयः प्रयोगाः क प्रत्ययस्य प्रयोगबाहुल्ये द्रष्टव्याः। च, तु वै इत्याद्यव्ययानां प्रयोगाः प्राचुर्येण लभ्यन्ते, मन्ये एते कवेः छन्दोबन्धासामर्थ्यं द्योतयन्ति। यद्यप्यधिसंख्यश्लोकेषु नैवार्थव्यञ्जकत्वे साहाया एतेऽव्ययाः। अपि त्वधिकपदत्वदोषमेवोत्पादयन्ति। अधिकपदत्वं दुरन्वयं चात्रैव द्रष्टव्यम्—

> नन्देनोक्तो ममत्वं बुध कुरु सुतयोर्नामयुक्तं द्विजाति—
> संस्कारं गुप्तमेवेति तदहमनयोः कुर्तुमागां गृहान्तः ।।१।३०।।

इत्ययं श्लोकस्य पूर्वार्धं एव। अत्र नामयुक्तमिति पुनः 'द्विजातिसंस्कारमिति पदे प्रयुक्ते। नाम संस्कारमिति पदमेव पदद्वयस्यार्थबोधनायालम्। एतेन दुरन्वयकष्टमपि न भवति।

यद्यपि एतादृक्प्रयोगाः कवेरस्य काव्यनद्याः भाषाप्रवाहे प्रस्तरा एव येहेतोः भाषाप्रवाहोऽस्य मन्दतामावहति। तथापि सम्पूर्णे काव्ये प्रसादगुणसत्त्वेन वैदर्भीरीतियुक्तत्वेन, भावनात्मकरसवत्त्वेन च हृदयहारितां गते ननु एते न गणनीयाः।

एतत् सर्वावलोकने कृते इदं प्रतीयते यत् कवेरस्य प्रारम्भिकी रचनैवेयम्। काव्यस्य मङ्गलश्लोके कविरप्रत्यक्षरूपेण कृष्णभक्तिशाखायाः वल्लभसम्प्रदायानुयायित्वं सूचयति। सम्भवतः काव्यं कर्तुमधिकतरोत्कण्ठया, कृष्णभक्तिपूर्णहृदयेन च युक्ततया सर्वप्रथममात्मन आराध्यं रुक्मिणीकृष्णमेवाधिकृत्य कविनेदं काव्यं कृतम्भवेत्। सर्वे एव भक्तकवयो निजदेवतां देवं वाधिकृत्य आत्मनः प्रथमकृतिमित्थं विचार्य विरचयन्ति यदेतेन काव्यकलायाः परिष्कारो निर्विघ्नग्रथसम्पादनं च भविष्यति। एवमेव कविना बालमुकुन्दभट्टेनापि कृतम्भवेदतः प्रथमकृतित्वादुपर्युक्तदोषाः स्वाभाविकाः एव।

एवं भाषाव्याकरणं चेत्यस्मिन्नध्याये प्रकृतग्रन्थस्य रुक्मिणीमङ्गलस्य भाषागतवैशिष्ट्यं व्याकरणात्मकप्रयोगं च निरूपितम् ।

## रुक्मिणीमङ्गलस्य साहित्यिकी समीक्षा

(क) छन्दः —काव्यस्य कलाभावश्चेति पक्षद्वयम् । तत्र कला-पक्षविवेचना प्रसंग एव छन्दसां मीमांसा समीचीना । छन्दः शब्दः चुरादि 'छदिसंवरणे' (चुरादिधातुसंख्या ४४) इत्यनेनासुन् प्रत्यये कृते परिणमति । शब्दोऽयं सामान्यतोऽभिलाषः कामना स्वेच्छाचारश्चेत्यर्थेषु गृह्यते । एषु स्वेच्छाचार इत्येवं प्रायो लोके प्रयुज्यते । कविबालमुकुन्द-भट्टस्य रुक्मिणीमङ्गलकाव्येऽयमेवार्थश्चरितार्थतरः । अर्थाच्छन्दसां चयनं तेषां प्रयोगा नियमाश्च सर्वं एव विषया कवेः स्वेच्छाचारितां द्योतयन्ति । महाकाव्यलक्षणप्रसङ्गे यथाचार्यविश्वनाथेनोक्तम्—

'एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः'

काव्येऽस्मिंस्तु कविरेतादृशः स्वच्छन्दो यत् त्रयोदशसु सर्गेषु कुत्रापि नियमः-नुगमनं न दृश्यते । नैकोऽपि कथितनियममनुसरति यत्तु कालिदासभारविमाघ-हर्षादिकवीनां कृतिषु जाघटीति । अपि च—

'नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते' ।

रुक्मिणीमङ्गलस्य एकैके सर्गे द्व्यधिकछन्दांसि प्रयुक्तानि । द्वितीये केवलं छन्दद्वयमेव किन्तु प्रारम्भिकोपजातित्रयं विहाय समस्तानि छन्दांसि वसन्ततिलकावृत्तान्येव । एकस्मिन् सर्गे सर्वाधिकमष्टौ छन्दांसि प्रयुक्तानि । निखिल एव महाकाव्ये त्रयोदशछन्दसां प्रयोगो विहित' । महाकाव्यस्य सर्गसंख्या छन्दसां च संख्या दैवादभिन्नाएव ।

रुक्मिणीमङ्गलकाव्ये पञ्चपञ्चाशदुत्तरपञ्चशतंश्लोकाः सन्ति । यस्मिन्प्रयुक्तानि निम्नलिखितप्रकारकाणि त्रयोदशछन्दांसि अनुष्टुप्, मन्दाक्रान्ता, आर्या, स्रग्धरा, शार्दूलविक्रीडितं, इन्द्रवज्रा, उपजातिः, वसन्ततिलकम्, वंशस्थम्, प्रमाणिका, गीतिका, चित्रलेखा, इति । यस्मिन् केवलमुपजातिवृत्तमेव त्रिशताधिकश्लोकेषु प्रयुक्तम् । अनया प्रोक्तोपजातिछन्दसंख्ययैव स्वकीयकाव्ये तस्य प्रयोगविषये लेखकस्य

बहुतरमभिमतं प्रस्फुरतितमाम् । स्पष्टम्, यदत्र छन्दसां वैविध्यं तु दूरे यातु परन्त्वत्रनियमराहित्यं नियतमेव चिन्तनीयम् । पाठकेन कथमपि निश्चेतुमिदं न पार्यते यत् कस्मिन् वर्णनविशेषे कविना किं च विशेषवृत्तं प्रयुक्तमिति । नाद्भुतम्, यदि उच्येतीदं यत् कविः स्वयमपि नासंदिग्धः किल कदा किं छन्दः प्रयोक्तव्यं कदा चापरमिति । यतोहि सम्पूर्णेऽस्मिन् महाकाव्ये मन्द्राक्रान्ता, आर्याचित्रलेखाप्रभृतीनि छंदासि केवलमेकवारमेव प्रयुक्तानि सन्ति । एतेषां नैकवारमपि प्रयोगो भवितुमर्हति किन्तु अत्र कवेरेतादृशो रुचिस्तु न, स्वाच्छन्द्यमेव द्योततेतराम् । अन्यथा अनुष्टुप्प्रमाणिकाप्रभृतिछन्दसामिव एतेषामपि प्रयोगे बाहुल्यं स्यात् । यत्तु वैविध्यम्, तत्तु न मनांसि तुदति यतो हि कविना सा विविधता अङ्गीकृता त्रयोदशधा छन्दसां प्रयोगो विहितः, उक्तं च प्रस्तुते महाकाव्येऽपि सर्गाणां संख्या एतावती एव । इतरैः कविभिरिव प्रत्येकस्मिन् सर्गे कविनापि एकस्यैव छन्दसः प्रयोगः स्याच्चेत्तदपि महाकाव्यस्यैकमितरल्लक्षणं एकवृतमयैः पद्यैरित्यपि संगमनाद्धेतोरस्य महाकाव्यत्वे इतोऽप्यधिका लोकप्रियता समागच्छेत् ।

किञ्च कवेरुपजातिं प्रत्येव विशेषानुरागोऽवबुध्यते, यदि च निखिलमपि महाकाव्यमुपजातिछन्दोमयमेव स्यात्, तदा तु न किञ्चिदशोभनीयं चिन्तनीयं वा भवेत् । यतोहि दृश्यते विशेषानुरागः कवीनां कस्मिंश्चिदेकस्मिन्नेव छन्दसि, तेनैव च छन्दसा तैस्तैः कविभिः चारुचमत्कारः प्रादर्शि । आचार्यः क्षेमेन्द्रोऽपि स्वोपज्ञसुवृत्ततिलकस्य तृतीये विन्यासे स्पष्टं लिखितम्—

'एकवृत्तादरः प्रायः पूर्वेषामपि दृश्यते ।
तत्रैवातिचमत्कारादन्यत्रारब्धपूरणात् ।।२८।।

किन्त्वत्रापि छन्दसां प्रयोगेऽस्माकं कविना बालमुकुन्दभट्टेन यादृच्छिकी भावनैवाभिव्यक्ती कृता । अथ च क्षेमेन्द्रोक्तं पूर्वोद्धृतवाक्यमस्माकं कवेर्नादर्शभूतं यत्र प्रत्युत अधोलिखितं वाक्यमेव कवेः आदरास्पदमनुकरणीयं च समस्ति । तद्यथा—

एकस्मिन्नेव यैर्वृत्ते कृतो द्वित्रेषु वा श्रमः ।
न नाम विनियोगार्हास्ते दरिद्रा इवोत्सवे ।। सु० वृ० ति० ।।३।२६।। इति

अत्रेदमप्यवधेयम् प्रस्तुते महाकाव्ये लघुगुरुप्रयोगोऽपि काव्यान्तराद्भिद्यते। यतोहि छन्दः शास्त्रिभिरेतेषां प्रयोगविषये यश्च नियमो निरूपितो यत् काव्यस्य कस्मिन् छन्दसि कश्च वर्णो लघुर्भवेत् केन च भाव्यं गुरुणेति। तदापि कार्त्स्न्येन काव्येऽस्मिन्न संगच्छते छन्दः शास्त्रिभिः सर्वसम्मानितो लघुगुरुविषयको नियमः। वृत्तरत्नाकराख्ये ग्रन्थे इत्थ प्रदर्शितम् —

सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः।
वा पदान्तस्त्वसौ वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः। वृ० र०। ८॥ इति

किन्त्वत्र प्रस्तुतमहाकाव्ये अनेकत्र सत्यपि युक्तपरत्वे[1] पूर्ववर्णो लघुरेव तिष्ठति। अत्रेदमवधेयमस्माकं महाकाव्यस्य पूर्वोदाहरणे प्रदर्शितः छन्दोभङ्गदोषः वृत्तरत्नाकरादिप्रथितछन्दः शास्त्रीयं ग्रन्थमनुसृत्यैवानुसन्धेयः।

सरस्वतीकण्ठाभरणादिछन्दःशास्त्रीयग्रन्थानुसारं तु नास्ति पूर्वोक्तः छन्दोभङ्गदोषः अपिच गुरुत्वे दोषोऽदोषश्च। तद्यथा—

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्।
न छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः॥ इति

**यतिविधानम्—**

छन्दःसूत्रे आचार्यपिङ्गलः यतिर्विच्छेदः इत्येतन्मात्रमभाणीत् यस्य विस्तरेण व्याख्यानमाचार्यो हलायुधः प्रास्तौत्।

अपि च वृत्तरत्नाकरे छन्दोमञ्जरीप्रभृतिवृत्तग्रन्थेष्वपि किञ्चिद्व्याख्यानं सञ्जातमस्ति, पुनरपि हलायुधेन सूक्ष्मदृशा अस्या निरूपणमकारि।

अत्रेदमवधेयं यद् वृतरत्नाकरछन्दोमञ्जरी प्रभृतिभ्यःप्रथितग्रन्थेभ्यः प्राचीनत्वे यथा विस्तृतं निरूपणं यतिविषयकं व्याख्यानं च हलायुधेन विहितम्, न तथा निरूपणं व्याख्यानं चार्वाचीनत्वेऽपि आचार्यान्तरैः प्रतिपादितमिति महच्चित्रम्। छन्दः सूत्रस्य 'यतिर्विच्छेदः' ६।१ इति सूत्रस्य हलायुधीयटीका इयती विशदा यया प्रकृतकाव्यस्य रुक्मिणीमङ्गलस्य अनेके

---

१. रु० मं० ४।११, ५।१६, ७।३३

यति दोषाः समं यान्ति। तद्यथा संक्षेपेण चतुःषु श्लोकेषु च या यतयः प्रतिपादिताः सन्ति। तासामास्माकं ग्रन्थे प्राचुर्यं वर्तते तद्यथा—

यति सर्वत्र पादान्ते श्लोकार्द्धे तु विशेषतः।
समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके॥
क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत्।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ॥
पूर्वान्तवत् स्वरसन्धौ क्वचिदेव परादिवत्।
द्रष्टव्यो यति चिन्तायां यणादेशः परादिवत्।

(हलायुधटीका छन्दः सूत्रस्य)

उक्तप्रकारका यतयोऽधिकांशतः दुःश्राव्यत्वान्न काव्यसौन्दर्याभिवर्धनाय, अपि च कालिदासप्रभृतीनां कुशलमहाकवीनां कृतिष्वपि न बाहुल्येनैतादृशा यतिप्रयोगा दृष्टिपथमायान्ति। परमाचार्यहलायुधेन एते प्रयोगाः विविधकवीनां निदर्शनपुरस्सरं प्रमाणिताः। अतः उपर्युक्तप्रकारेण तस्य यतिनिर्देशमुपलक्ष्य अधिकांशदोषानां समाधानं भवति।

कस्मिन्स्थले यतिः काव्यशोभावर्धनाय कुत्र चापकर्षाय भवतीति विषये छन्दोमञ्जरीकर्तुराचार्यगङ्गादासस्य गुरोः पुरुषोत्तमभट्टस्य निम्नलिखितपद्योऽवलोकनीयः—

'क्वचिच्छन्दस्यास्ते यतिरभिहिता पूर्वकृतिभिः
पदान्ते सा शोभां व्रजति पदमध्येत्यजति च।
पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां
यथा कृष्णः पुष्णात्वतुलमहिमा मां करुणया॥' इति

अनेन स्पष्टमिदं यत् पुरुषोत्तमभट्टेन पदमध्ययतिस्तिरस्कृता। वस्तुतः ईदृश्यो यतयः काव्येऽस्मिन् बहुलतराः काव्यसारल्यमपास्य अर्थाववोधे वाधिकाः सन्ति। महद्दुर्गुणोऽयं पदमध्ययतेः, अनेन च न मुक्तो वालमुकुन्दभट्टः। यद्यपि हलायुधः पदमध्यतिं समर्थयामास परं—

'यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ'

इति कथयित्वा अवरोधोऽपि संसूचितः। यतः काव्येऽस्मिन् बहुषु स्थलेषु कस्यचित् पदस्याद्यो वर्णः अन्तिमो वा यत्या इतस्ततः नीयते तदा छन्दः कर्णकटुत्वं सौन्दर्यापकर्षकत्वं च भजतीति निर्दिष्टं प्राक्।

श्वेतमाण्डव्यादयो विद्वांसः यतिनियमान् नाङ्गीकृतवन्तः तन्न समीचीनम्। बालमुकुन्दभट्टेन यतिविषये यत्पूर्वमतमङ्गीकृतं तत् शेमुषीकानां कण्ठादधो न याति। काव्यादर्शकर्तुः —

'श्लोकेषु नियतस्थाने पदच्छेदं यतिं विदुः।
तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा ।। इति

समुद्घोषणा, यद्यपि कविरस्माकं विषयेऽस्मिन् नावहितो वर्तते। क्षेमेन्द्रादयो मनीषिणः छन्दः प्रयोगविषये यन्निर्दिष्टवन्तः सामान्यतया तदपि कविनानेन नाङ्गीकृतम्। यत्क्वापि स्थले छन्दसा अज्ञातरूपेण श्लोकः सुश्लोको यातः तद्यथा सम्भवं यदृच्छया सम्पन्नमस्ति। कवेः वसन्ततिलकाछन्दः निदर्शनाय उचितम्।[1]

श्लोकेऽस्मिन् शब्दविन्यासस्य प्रसादगुणगौरवस्य सामञ्जस्यं पदे-पदे प्रस्फुरति चित्तं चावर्जयति। कृष्णशब्द इव वस्तुतः कृष्णवर्णनेऽस्मिन् चित्तावर्जको धर्मो लसति। स्रग्धराशार्दूलविक्रीडिते च छन्दसी बहुधा प्रयुक्ते वर्तेते। परं कविनानेन शार्दूलविक्रीडितापेक्षया स्रग्धराछन्दः एव साधु परिष्कृतम्। गीतिकाप्रयोगो यद्यपि संख्यायां नाधिकः तदापि विहित-मेतद्वृत्तमतिसरसं गेयं च वर्तते। इन्द्रवज्रा, इन्द्रवंशावंशस्थादीनि छन्दांसि सामान्यतया प्रयुक्तानि सन्ति काव्येऽस्मिन्। सर्वाधिकं ध्यातव्यं वृत्तं यत् किञ्चदस्ति सम्पूर्णे काव्ये तदुपजातिछन्द एव। परं तत् प्रयोगेऽपि नियम-विषये बह्वनवस्थितो वर्तते कविः। स्वस्वभाव वशात् कविना छन्दोविषये बहु स्वाछन्द्यं प्रदर्शितमिति चित्तं दुनोति रसिकानाम्।

प्रायः समानसंख्यकवर्णानामुपजातिर्भवति परं रसमत्तेन कविना इन्द्रवंशा, उपेन्द्रवज्रा इन्द्रवज्रादीनि छन्दांसि सङ्गमय्य अपूर्वमद्भुतं चोपजातिवृत्तं[2] संसृष्टम्।

इत्थमन्योऽपि वंशस्थइन्द्रवंशाउपेन्द्रवज्राछन्दसां सम्मिश्रणं विधाय श्लोको विरचितः[3]।

उदाहरणयोर्मध्ये दुर्लभायितं वर्णसंख्यामिश्रणं तत्कवेः साहसं स्वाच्छन्द्यं नूतनाध्यवसायं च यथासम्भवं सूचयति। यतोहि कविपरम्परासु

---

१. रु० मं० १।३५।

२ रु० मं० १।१०।

३. रु० मं० ४।१८।

नैतादृशी योजना छन्दस्सु समुपलभ्यते । आकरग्रन्थेष्वपि नैतादृशी प्रणाली प्राप्यते ।

न चैतावन्मात्रमपितु वृत्तद्वयमादाय तेन नूतनोपजातिवृत्तरचना[1] रचिता ।

पद्येऽस्मिन् प्रथमो द्वितीयश्च पादौ वसन्ततिलकाछन्दसा तृतीयचतुर्थ-चरणौ इन्द्रवज्रा छन्दसोपनिबद्धौ प्रयोगवैचित्र्यं कवेः प्रदर्शयति । यतोहि समसंख्यकवर्णयोर्वृत्तद्वयोरुपजातिः सम्मता परं चतुर्दशवर्णमयं वसन्त-तिलकाछन्दः एकादशवर्णमयमिन्द्रवज्रा च छन्दः प्रयुज्य, दुर्लभोपजातिच्छन्द शास्त्रविमर्दिनी मतिमतां मनोमोहिनी निर्दिष्टा । इत्थं त्रिवृत्तलसितोप-जातिः असमसंख्यकवृत्तद्वयोपलसितोपजातिः काव्यान्तरे दुर्लभे स्तः । कारणं रसिकैरन्वेष्टव्यम् । अस्माकं तु मतमस्ति यत् प्रमादः प्रथमः कारणं द्वितीयं तु धार्ष्ट्यम् । प्रमादस्तु स्वाभाविकः । यतो हि उपरितनानां त्रिविधवृत्तानामिन्द्रवंशा-वंशस्थ-इन्द्रवज्रोपेन्द्रवज्राछन्दसां परस्परं साम्यम् ।

अन्यद्द्वितीयं कारणं कविर्ज्ञात्वा प्रस्तौतीति सम्भावयामः । यतोहि कदाचिदेतादृशेभ्यः प्रयोगेभ्यः नूतनोद्भावनाः सम्भवन्ति । सत्य-मस्ति, आदौ केचन् प्रयोगाः भाषाः वेति प्रचलन्ति पश्चान्नियमादयः । सम्भवतः एतादृशाः प्रयोगाः वृत्तविधातृणां दृष्टिपथं पुरा नायाताः यस्मादुपजातौ ते सम्मेल्य न प्रादर्शयन् । अतः दृढसमालोचने दोषकोटिं नावगाहते स्वाच्छन्द्यमिदमपितु नूतनोद्भावनाः कल्पनाः कविमनसि सर्वदा जागर्तितराम् । वस्तुतः परम्पराप्रश्नस्तु चिन्त्यो भवति । प्रमादाद् विज्ञाय यद्भवति, द्वयोःस्थित्योर्वैचित्र्यमिदं सुधीभिश्चिन्त्यम् ।

या मान्यता प्रचलति सा चिरं यावत् प्रयुक्ता सती परम्परा-रूपेण मान्यते । किञ्च परम्पराभङ्गोऽसुकरः सामाजिकपरम्परेव भवति । श्वेतमाण्डव्यादयो यतिं न स्वीकुर्वन्ति परमेतत् मतमद्यावधि केषांञ्चिदपि विदुषां हृदये नावतीर्णम् चत्वारः पञ्चषो वा कवयो भवतु नाम बालमुकुन्द-भट्ट इव यत्यवहेलनं स्वीकृतवन्तः, धारणैषा शेषं गता । यदिहि आधुनिकहिन्दीगद्यगीतिरिव अस्माकं कविः संस्कृतेऽपि रचनाःअकरिष्यत्तदा एकः नवाविष्कारोऽभविष्यत् । अपरं छन्दोनियमोल्लङ्घनाय लग्नो दोषः

---

१. रु० मं० ८।२८ ।

नाभविष्यत् । अतः यथा समाजे सामाजिकपरम्परा व्यक्तिजीवनेऽपरिहार्या भवति तथैव काव्यपरम्परासु छन्दः परम्परा अवधेयार्हा भवत्येव दण्डिना काव्यादर्शे भणितं —

'श्लोकेषु नियतस्थाने पदच्छेदं यतिं विदुः ।
तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा ।।'

अस्त्वस्माकं मतमस्ति विषयेऽस्मिन् यद् बालमुकुन्दभट्टेन महाकाव्यरचनासमये काव्यनियमा विशेषतश्च छन्दोनियमाः विस्मृताः ।

निरङ्कुशाः कवयः इत्युक्त्या निसर्गस्वच्छन्दप्रकृतिकः कविः देशकालनियमानवमत्य परं तिष्ठति । परं छन्दो विषये बालमुकुन्दभट्टेन निश्चितं नियमरेखा समुल्लंघिता । सकलेऽपि ग्रन्थे सर्वत्र भावकल्पनाभाषा छन्दस्सु स्वाच्छन्द्यं प्रदर्शयन् वृत्तविषये कृतं प्रमादबाहुल्यं न केवलं दोषायापितु नव्योद्भावनायाः नियमभङ्गक्रियायाश्चापि आदर्शमुपस्थापयति ।

नियति कृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।

अत्र तु नियतिकृतनियमभङ्गो न केवलं विहितः अपितु शास्त्रनियमभङ्गोऽप्याचरितः । अयं दोषः गुणो वेति सुधीभिः स्वयमेवोह्यम् । वयं तु

'अपारे काव्यसंसारे कविरेव प्रजापतिः
यथास्मै रोचते विश्वं तथेदं परिवर्तते ।'

इति मत्वा सादरं कविं सम्भावयामः ।

(ख) अलङ्कारः कलापक्षविवेचनाप्रसङ्ग एवात्र अलङ्कारा विवेच्यन्ते । स्थूलरूपेणालङ्काराः रूपत्रये विभक्ताः—शब्दालङ्कारः अर्थालङ्कारः उभयालङ्कारश्चेति । प्रस्तुतेऽस्मिन् काव्ये शब्दालङ्कारापेक्षया अर्थालङ्काराः बाहुल्येन प्रयुक्ताः । शब्दालङ्कारेषु अनुप्रास[1]यमकौ[2] साधु सन्दृब्धौ ।

एकस्मिन्नेव श्लोके यमकस्य द्विप्रकारको विधिः कविना संगुम्फितः । अर्थालङ्कारविषये कवेः रुचिरधिका परिलक्ष्यते । तेषु अर्थालङ्कारे यस्य कस्यचिद्वस्तुनः घटनायाः वा उपमातुं निष्णातोऽयं कविः क्वचित्

---

१. रु० मं० ११४१ ।

२. रु० मं० ३१७ ।

क्वचित्तूपमानवाहुल्यं विलोक्य वक्तुं शक्यते यत् उपमैव[1] कविकर्मणः प्रमुखं सौभाग्यसूचकं सौन्दर्याधायकं वरीवर्ति। यद्विना कवेः कविताकाविनी विधवेव श्रीहीना जायते। नेदं तात्पर्यमस्य यत् कविनानेन नान्येऽलङ्काराः विहिताः। रूपकालङ्कारस्य सन्दर्भमपि साधु सन्दृब्धमस्ति। यदि कवेरुपमा कविता कामिन्याः तारोहारोऽस्ति तदा रूपकाल[2]-ङ्कारास्तु शब्दङ्करः कङ्कणः।

उत्प्रेक्षा[3]-सन्देहः[4]-अपह्नुतिः[5]-श्लेषः[6]-व्यतिरेकः[7]-अर्थान्तरन्यास[8]-अतिशयोक्तिः[9]-उदात्त[10]प्रभृतयोऽप्यलङ्काराः सुष्ठु निवद्धाः।

अलङ्काराणां भूयांसो भेदाः प्रभेदास्तदन्वेषणं च रसास्वाद विहन्तीति कृत्वा उपेक्षणीया एव ते, मम्मटसम्मतम्। अतः परम्पराप्रमाणमङ्गीकुर्वद्भिरस्माभिरपि अत्र रसास्वादसहकारीणामेव स्पष्टप्रतीतानामलङ्काराणामेवोल्लेखोऽकारि।

**रसो ध्वनिश्च**—अधुनात्र भावपक्षान्तर्गतः काव्यस्य महत्वपूर्णः सौन्दर्याधायकश्चाङ्गो रसः निरूप्यते। महाकाव्यस्य शृङ्गारोऽङ्गीरसः। अस्य भेदद्वयम्-सम्भोगो विप्रलम्भश्च। 'तत्राद्यः·······एक एव····। अपरस्तु अभिलाषविरहेर्ष्याप्रवासशाप हेतुकः इति पञ्चविधः' इति मम्मटः।

विश्वनाथादिभिराचार्यैरभिलाषः पूर्वराग इत्यङ्गीकृतः यस्य चत्वारि कारणानि स्वप्नदर्शनं, चित्रदर्शनं, गुणश्रवणं, प्रत्यक्षदर्शनं च। रुक्मिणीमङ्गले अभिलाषरूपो विप्रलम्भः रुक्मिणीकृष्णयोर्वर्तते यत्तु देवर्षिनारदवचोभिरन्योन्यगुणश्रवणादङ्कुरितः पल्लवितश्च। विप्रलम्भोऽयं दशमे सर्गे

---

१. रु० मं० १।२७, ३।१८, १०।५, ११।६।
२. रु० मं० ११।१२, ११।१३।
३. रु० मं० २।३, ८।३९।
४. रु० मं० १।२९, १०।२२।
५. रु० मं० ७।२३, १०।५७।
६. रु० मं० ११४।
७. रु० मं० १।८, २।४, ५।२०।
८. रु० मं० ७।२९।
९. रु० मं० ९।३६।
१०. रु० मं० ५।५।

रुक्मिणीकृष्णयोः संयोगेन परिणमते। रौद्रो वीरः अद्भुतभयानक-हास्यप्रभृतिरसाः काव्येऽस्मिन्नङ्गरूपेण शृङ्गारमङ्गिनमुपस्कुर्वन्ति। रस-मभिव्यञ्जयितुं विभावानुभावसंचारिभावाः मिलित्वैव स्थायिभावं परिपोष्य रसकोटिं प्रापयन्ति, नान्यतरस्तेषु कश्चिद्रसव्यञ्जने समर्थस्तथापि रस-विशेषे निश्चितेषु विभावानुभावसंचारिभावविशेषेषु केषुचिदेकस्यापि वर्णने रसाभिव्यक्तिर्जायत एव। तत्र विभावादिषु एकस्य सत्त्वे भवतीत-रयोराक्षेपः, द्वयोर्वा सत्त्वे एकस्यैवाक्षेपः। आक्षेपो हि तत्र तद्रसाभिव्यक्तौ तेषां विभावादिविशेषाणां निश्चितत्वादाकांक्षोत्थाप्या एवेति बोध्यम्। तदत्र पण्डितराजजगन्नाथोक्तिरनुसंधेया—

'एवं च प्रामाणिके मिलितानां व्यञ्जकत्वे, तत्र क्वचिदेकस्मादेवा-साधारणाद् रसोद्बोधः, तत्रेतरद्वयमाक्षेप्यम्, अतो नैकान्तिकत्वम्'।

एवं च एतेन सूत्रविरोध इत्यपास्तम्, साम्प्रतमत्र रुक्मिणीमङ्गल-काव्ये प्रतीतानां रसानामुदाहरणानि प्रस्तूयन्ते। तत्र तत्रोदाहरणेषु रसगङ्गाधरीया पूर्वोक्तिरवधेया येन रसपरिपाकज्ञाने नानुपपत्तिर्भवेत्।

१. तत्र प्रथमं शृङ्गाररसः उदाह्रियते—प्रस्तुतमहाकाव्ये संयोगा-पेक्षया विप्रलम्भ एव गरीयान् सहृदयहृदयहारिमर्मस्पर्शिचानुभूयते। काव्येऽस्मिन् व्यक्तो विप्रलम्भोऽयं मम्मटानुसारेण अभिलाषहेतुकः, विश्वनाथमतेन पूर्वरागः दशरूपककाररीत्या च अयोगविप्रलम्भ इति लक्षयितुं शक्यते। यतो ह्यत्र यः विप्रलम्भः[१] परिपुष्टः स रुक्मिणी-कृष्णयोर्मिथः संयोगात्पूर्व एव।

संयोगशृङ्गारस्य[२] स्थलान्यपि हृदयाह्लादकारकाणि।

रौद्र[३] भयानक[४]हास[५]वीरा[६]द्भुत[७]प्रभृतयो रसा अपि सुष्ठु अभि-व्यक्ताः।

---

१. रु० मं० ३।८, ३।९, ४।९।
२. रु० मं० ९।१४, १०।६६।
३. रु० मं० १३।३६, ११।४६।
४ रु० मं० ११।१२, १३।
५. रु० मं० १२।२१।
६. रु० मं० ९।३२, ११।५।
७. रु० मं० १।२४।

वस्तुतः रसनिरूपणेन निष्कर्षोऽयं समायाति यत् काव्यात्मा रसः। अस्य स्वरूपमपि घनानन्दानुभव एव, किन्तु इदमपि कदाचित् सम्भवितुं शक्नोति यद्रसरूपघनानन्दानुभवेऽस्मिन् तस्य कश्चिदेक एवांशः विशिष्ट-चमत्कृतः स्यात्, तस्यामास्वादनवेलायां भावध्वनेरवस्था। एवं यत्र उदयस्थित्यपायावस्थायां विभक्तेषु व्यभिचारिभावेषु कश्चिदेकः सर्वोत्कृष्टचमत्कारी प्रतीयेत तत्र रससामान्यस्य अक्षुण्णत्वेऽपि आस्वाद्य-सौन्दर्यविराजमानेऽपि आस्वादातिशयकारणं सहकारिभाव एव सहृदयैः स्वीकृतो भवति। एवं तत्र भावस्यैवानन्दः सिद्ध्यति। अभिनवगुप्तोऽपि—

> 'यद्यपि च रसेनैव सर्वं जीवति काव्यम् तथापि तस्य रसस्यैकघन-चमत्कारात्मनोऽपि कुतश्चिदंशात् प्रयोजकीभूतादधिकोऽसौ चमत्कारो भवति। तत्र कदाचिदुद्रिक्तावस्थायां प्रतिपन्नो व्यभि-चारी चमत्कारातिशयप्रयोजको भवति तदा भावध्वनिः ॥'
>
> ध्व० लो० ॥ २।३।

इति स्वीकरोति। अतः प्राधान्येनाभिव्यक्तो पुष्टश्च स्थ य्येव भावः। आचार्यमम्मटेन—

'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ॥ ४।३५

'आदिशब्दान्मुनि-गुरु-नृप-पुत्रादिविषया, कान्ताविषया तु व्यक्ता शृङ्गारः' इति भावो विवेचितः।

कालान्तरे रूपगोस्वामिप्रभृतयः कतिपयविद्वांसो देवविषयां रतिं भक्तिनाम्नोऽभिनवरसस्य स्थायीति पुत्रविषयां रतिं च वात्सल्यरसस्येति स्वीकृतवन्तः। परन्तु पण्डितराजादयस्तथान्ये प्राचीनाचार्याः एतान् सर्वान् भाव एव मन्वते।

देवगुरुमुनिपुत्रविषयको रतिभावः, हर्षमोहसुप्तिविबोधग्लानिशङ्का-दैन्यचिन्तोग्रतावितर्कौत्सुक्यादयः सर्वे भावास्तथान्येऽपि ये काव्येऽस्मिन् प्राधान्येनोपलभ्याः रसाणामिव सहृदयहृदयाह्लादकारिणः।

इदानीं रसविवेचनमनु रुक्मिणीमङ्गले ध्वनिः प्रदर्श्यते। मुख्यतो ध्वनिः द्विधा। आद्यो लक्षणामूलोऽपरोऽभिधामूलः। लक्षणामूलः अविक्षित-वाच्योऽपि कथ्यते। अस्यापि भेदद्वयम्—

प्रथमोऽर्थान्तरसङ्क्रमितवाच्यः । प्रकृतग्रन्थे[1] नेत्राञ्जलिभिः इत्यनेन रूपकेण सह 'पपु' क्रिया सतृष्णदर्शनमित्यर्थं लक्षयितुमर्थान्तरे सङ्क्रमिता । इत्थमत्र अर्थान्तरसङ्क्रमितवाच्यो लक्षणामूलो ध्वनिः । एवमन्यत्रापि यथा १।२७ श्लोके 'न्यमज्जत्' शब्देन निरतिशयानन्दप्राप्तिस्तथा १।५६ श्लोकेऽपि पीयमानेत्यनेन सतृष्ण दर्शनमित्यर्थान्तरौ व्यङ्ग्यौ ।

ध्वनेरन्यः प्रमुखो भेदः अभिधामूल[2] इति ।

अत्रैव विवक्षितान्यपरवाच्योऽपि कथितो, विवक्षाया अन्यपरत्वात् । अस्य भेदद्वयम्, (१) असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिरित्यस्मिन् विषये मम्मटोक्तिः —

'कोऽप्यलक्ष्यक्रमव्यङ्ग्यक्रमोऽपरः ॥ ४।२५ का० प्र०

अलक्ष्येति न खलु विभावानुभावव्यभिचारिणः एव रसः अपितु, रसस्तैरित्यस्तिक्रमः स तु लाघवान्न लक्ष्यते । तत्र—

रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः ॥४।२६॥ इति

अलक्ष्यक्रमव्यङ्ग्योऽयं रसध्वनिरपि कथ्यते । अयं तु रसभावध्वनि-रसाभासादयो यत्र प्रदर्शितास्तत्रैव बोध्याः अतो नायम् पुनरुक्तिमानीयते ।

२. संलक्ष्यक्रमव्यङ्ग्यो ध्वनिः । शब्दत एव स्पष्टोऽयम्, यस्तु द्विधा अलङ्कारध्वनिः वस्तुध्वनिश्च । अलङ्कारध्वनिरपि द्विधा—

अलङ्कारेण अलङ्कारव्यङ्ग्यरूपः[3] ।

यत्र मानसहंसा इति पदं श्लिष्टम्, यस्याद्योऽर्थो मानससरोवरस्य हंस इवापरः मनोरूपो जीवोऽतोऽत्र श्लेषालङ्कारः । येन ध्वनितः उपमा-लङ्कारो यन् मनोरूपी जीवः मानसरोवरस्य हंस इव । एवमत्रालङ्कारो व्यङ्ग्यः ।

---

१ रु० मं० १०।१७ ।

२. रु० मं० ४।२५ ।

३. रु० मं० १।१४ ।

वस्तुना अलङ्कारो[1]।

यत्रोपमा त्वस्त्येव परं सहैव प्रतिभान्वितमिति पदार्थेन मुहुः श्वसन्तमित्यस्य हेतुता द्योतते येन वस्तुना काव्यलिङ्गालङ्कारो ध्वनितः।

वस्तुध्वनिरपिद्विधा। आद्यो वस्तुना वस्तु[2]।

यस्मिन् दीनैकवन्धो दयाकरानलसहादिपदार्था रुक्मिण्याः रक्षणी यार्हतारूपवस्तु ध्वनयन्ति। अतो वस्तुना वस्तु व्यङ्ग्योऽत्र।

अन्यदप्युदाहरणं[3] यत्र श्लोकांशे भविष्यतीशकुशलमिति वाक्यार्थ-रूप वस्तुना रुक्मिण्या वर्तमानकालिककुशलाभावो ध्वन्यते इति वस्तु।

अपर अलङ्कारेण वस्तुव्यङ्ग्यरूपो[4] ध्वनिः।

यत्रोपमालङ्कारो यस्मिन् रुक्मिणी परिपूर्णवेगा गङ्गेति वर्णिता। परिपूर्णवेगत्वेनात्र रुक्मिणीकृष्णयोः संयोगनैश्चित्यरूपं वस्तु ध्वन्यते।

एवं रुक्मिणी मङ्गले ध्वनेरुपलब्धप्रमुखभेदातिरिक्तं [5]व्यङ्ग्योऽपि दर्शनीयः।

उभयत्र श्लोकवाक्ये स ईश इति पदेनाभिहितुं नार्हति व्यङ्ग्योऽयं काक्वाक्षिप्तत्वाद्वाच्यनिषेधेनैव सह प्रतीयते। अतो वाच्यार्थस्य गुणीभूत-त्वाद्गुणीभूतव्यङ्ग्योऽत्र स्पष्ट एव।

एवं निखिलेऽस्मिन् महाकाव्ये ध्वनेः प्रमुखभेदेषु दृष्टेषु सत्सु काव्य-स्यास्य ध्वनिकाव्यत्वे न संशयः।

---

१. रु० मं० ११।१६।

२. रु० मं० ४।३।

३. रु० मं० ६।२।

४. रु० मं० २।१।

५. रु० मं० ३१।७, २८।

## रुक्मिणीमङ्गलस्य महाकाव्यत्वम्

संस्कृतसाहित्यशास्त्रे महाकाव्यलक्षणं सर्वप्रथममाचार्यभामहो लक्षयामास, ततः दण्डी रुद्रटः, आनन्दवर्धनः कुन्तकः अग्निपुराणम् कविराजो विश्वनाथश्चापि एतत्स्वरूपमीमांसां चक्रुः। एतेषु सर्वेषु साहित्याचार्यवर्येषु कविराजो विश्वनाथः सर्वेभ्योऽर्वाचीन इत्यत्र न कोऽपि विसंवादः अतस्तेन-यल्लक्षणं महाकाव्यस्य साहित्यदर्पणे षष्ठपरिच्छेदे कथितं तन्नवीनं सकल-पूर्ववर्तिकाव्यशास्त्रिसम्मतम् सर्वथा समंजसं चास्ति कविराजेनानपेक्षितांशाः सर्वथा वर्जयित्वा केवलमपेक्षितांशा एव समसामयिकाः तावत्कालीनमहा-काव्येषु समुपलभ्याः व्याख्याताः परिभाषिताश्च। यतो हि निश्चप्रचमिदं भामहस्य काले विश्वनाथकालापेक्षया अल्पान्येव महाकाव्यानि उपलब्धा-न्यासन्नतो भामहेन समुपलब्धानि काव्यान्येव दृष्टिगतानि कृत्वा लक्षणं लक्षितं, कविराजो विश्वनाथस्तावत्कालमुपलब्धं महाकाव्यस्तोममवलोक्य स्वकीयसमन्वयात्मकमहाकाव्यपरिभाषायामन्तर्भावितमतः अत्राधिकृत्य रुक्मिणीमङ्गलस्य महाकाव्यत्वसंसाधने आचार्यविश्वनाथस्य महाकाव्य-लक्षणमेव ध्यानाध्वीकृतम्।

१. प्रायः सर्वकाव्यशास्त्रिणः सर्गबन्धो महाकाव्यमिति प्रवाद-मङ्गीकृत्य महाकाव्यं सर्गेषु बद्धमवश्यं मन्वते। तदत्रापि रुक्मिणीमङ्गले लक्षणं पूर्णतया साकल्येन सङ्गच्छते, यतो हि इदमपि काव्यं सर्गेषु निबद्ध-मस्ति। यद्यपि सर्गसंख्याविषये भामहदण्डीप्रभृतयः पूर्वाचार्या मौनमेवा-कलयन्ति पुनरपि कविराजविश्वनाथस्य स्पष्टमुद्घोषः —

**सर्गा अष्टाधिका इहेति।**

अस्मिन् रुक्मिणीमङ्गले काव्येऽपि समुपलब्धस्वरूपेऽस्माभिस्त्रयोदश-सर्गास्सन्ति। सर्गाणां विस्तारविषये निगदितं कविराजेन—

नातिस्वल्पा नातिदीर्घाः सर्गा इति। दण्डिना तु केवलमनति-विस्तीर्णैरित्येवालक्षि रुक्मिणीमङ्गलेऽपि सप्ततेरधिकाः श्लोकाः कस्मिंश्चिदपि सर्गे नोपलभ्यन्ते। एवं च विश्वनाथोक्तं नातिदीर्घमिति सर्गलक्षणम् यत्रजाघटीति तत्रैव नाति स्वल्पा इति सर्गलक्षणं सोऽत्र रुक्मिणीमङ्गले काव्ये न सङ्घटते। यतो हि द्वितीये चतुर्थे पञ्चमे षष्ठे च सर्गे त्रिंशतोऽपि न्यूनसंख्याका श्लोकाः सन्ति। किञ्चद्वितीये सर्गे पञ्चदशश्लोक-

मात्रमेव। अतोऽस्माकमध्येतव्ये रुक्मिणीमङ्गले काव्ये आचार्यप्रवरस्य दण्डिन एव सर्गलक्षणं सङ्गच्छते। तद्यथा दण्डिप्रोक्तमनतिविस्तीर्णैरित्येव सर्ग विस्तारलक्षणम्। अत्रेदमाकूतं यत् सर्गे श्लोकानां भूयसी संख्या न स्यादिति, अल्पीयस्यां तु श्लोक संख्यायां न काचिद्धानिरर्थाद्विस्तारः प्रतिषिद्धो न तु संकोचः। आचार्यभाम्हेनापि सर्गविस्तारविषये नहि किञ्चिदभाणि। किञ्च पूर्वोक्तेषु सर्गेष्वविस्तारे हेतुः प्रसङ्गपरिसमाप्ति प्रसङ्गान्तरप्रारम्भश्च।

आचार्यरुद्रटानुसारं विषयस्य तावदेवोपवृंहणमलङ्करणं च औचित्यास्पदं यावता कथावस्तुनः कथमपि अविच्छेदः सम्पद्येत (काव्यालङ्कारः षोडशोऽध्यायः। अस्माकं कविवर्येण रुक्मिणीमङ्गलकारेण तावतैव वर्णनमलङ्करणं चाकारि येन कथावस्तुप्रवाहो न विच्छिन्द्यात्। एवं च सर्गेषु श्लोकानां संख्याल्पत्वेऽप दोषाभाव एव सर्वथा भावनीयः।

तत्रैको नायकः सुरः इत्येतदनुसारं महाकाव्ये देवद्विजनृपतय एव नायकत्वं निर्वोढुं शास्त्रसम्मताः। अत्रप्याधिकृतेऽस्माकं महाकाव्ये नायको भगवान् श्रीकृष्णः स च भगवतः सत्त्वतनोर्विष्णोरवताररूपेणात्राभिमतः तच्च[1] नारदोक्त्या सर्वथा सुस्पष्टं प्रतिभाति। वस्तुस्तु कविना ग्रन्था[2]दावेव विष्णुश्रीकृष्णयोरभेदसम्बन्धः प्रारूपि पश्चाच्च यथास्थलं श्रीकृष्णस्य भगवत्ता अवतारान्तताराणि उदलेखि।

२. यद्यपि नायकः कृष्णः सर्वसमर्थः साक्षाद्विष्णुरूपस्तथापि चन्द्रवंशिनः क्षत्रियस्य वसुदेवस्यापत्यरूपेणावतरितः, निखिलमहाकाव्यीयसंघटनानां द्वारिकाधीशरूपेण चित्रितोऽस्ति। अतो यत्र देवत्वे नायकत्वविचारस्तत्रैव मनुष्यत्वरूपेणापि तद्विचारो मूल्यांकनं च कर्तुं शक्यते। तद्यथा—

'सद्वंशः क्षत्रियो वापि' इति लक्षणानुसारेण क्षत्रियवंशोद्भवानां राज्ञां नायकत्वं सर्वैरप्यालङ्कारिकैः सर्वसम्मतेनोरीकृतम्। प्रकृतकाव्यस्य नायको भगवान् वासुदेवः क्षत्रियाणां चन्द्रवंशविभूषणः सर्वथा पारिभाषिके नायकपदे आरोढुं समुचितः। अयं चास्मकं नायकः उत्तमकोटिको धीरोदात्तलक्षणोपेतः प्रतिभाति। तद्यथा धीरोदात्तलक्षणानुसारं श्रीकृष्णः

---

१. रु० मं० १।१७ १८

२. रु० मं० १।५

सर्वथा अविकत्थनः आत्मश्लाघवर्जितश्चित्रितो वर्तते। अखिलेऽस्मिन् महाकाव्ये नहि किमपि एतादृशं स्थलं यत्र स आत्मानं प्रशंसन् प्रदर्शितो भवेत्। एवमेव धीरोदात्तस्य द्वितीयोऽपि गुणः क्षमावत्तात्र साधु संघटते। तथाहि संगरे यदा श्रीकृष्णोऽसिधारेण रुक्मिणं हन्तु समुद्यतस्तदा रुक्मिण्या अनुशयेन बलरामस्य प्रतिबोधनेन च तद्वधाद्विमुखायते[1]। तस्य शिरोमुण्डनं च विधाय परित्यागमाचरति। अनेन नायकस्य वासुदेवस्य क्षमाशीलता एव परिस्फुरति। धीरोदात्तनायकस्य तृतीयो गुणः गाम्भीर्यं तच्चाप्यत्र सम्यक् सङ्गमयितुं शक्यते। तद्यता रुक्मिणीमपहृत्य मार्गे गमनकाले यदा रुक्मी पृष्ठभागादाक्रमते तदापि स पूर्णतया शान्तोऽपारपारावार इव प्रतिभाति, किञ्च भयभीतायां भैष्म्यां तां प्रतिबोधयति तन्मुखे किञ्चदपि लक्षणं नालक्ष्यते भयक्रोधयोः प्रत्युत् स्मेराननः स युध्यते[2]।

आस्माकं नायके भगवति वासुदेवे महासत्त्वगुणं सम्यक् द्रष्टुं शक्यते। वर्तते हि कृष्णान्तःकरणे शोकक्रोधादीनां सर्वथा सत्ताभावः। स जानाति, रुक्मिणीहरणमवरोद्धुं शिशुपालजरासन्धबार्हद्रथरुक्मिप्रमुखाः योद्धारः सन्दानितकटयस्सन्ति, पुनरपि रुक्मिणीपत्रानुरोधेन तामात्मसात्कर्तुकामो नहि परिभ्रंशते स्वकरिष्यमाणकार्यपथात्। न मनागपि विचलति क्षिप्रं सज्जते च, अतएव स्थेयानपि नायकोऽस्माकम्। नहि कदापि प्रकटते तस्याहङ्कारः यद्यपि काव्ये युद्धवर्णनप्रसङ्गे नायकस्य वीरभावोद्भासने वा कविना प्रख्यातप्रकान्तपराक्रमस्य सर्वविधसमर्थस्य कृष्णस्य उत्साहो-द्दीपनोऽहङ्कारः बहुधा व्यचित्रि, तथापि परोक्षरूपेणैव दर्पादयो भावास्तत्र तत्र स्थलेषु वर्णिताः, नहि प्रत्यक्षेण कमप्युद्दिश्य नायकोक्तिरूपेण एतेऽहङ्कारादयो भावाः प्रदर्शिताः। एतेन तस्य स्थैर्य्यं न किञ्चद्धीयते प्रत्युत् नायकचरित्रोद्घाटने वीररसादिप्रदर्शनकाले अहङ्कारादीनां समा-वेशोऽनुगुण एव।

धीरोदात्तस्य नायकस्य यदन्यद्वैशिष्ट्यं दृढव्रतत्वं तदपि साधुतया श्रीकृष्णे विलोकयितुमस्माभिः पार्यते। रुक्मिण्या प्रेषितस्य दूतस्य समक्षमेव तां हर्तुं प्रतिजानीते[3]। अगाधबाधागारसम्मुखे सत्त्वेऽपि आसमाप्ति

---

१. रु० मं० १२।१६

२ रु० मं० १२।८

३. रु० मं० ६।२५

निर्वहति[1] एवं च धीरोदात्तलक्षणं कविराजविश्वनाथोक्तं पूर्वाचार्यपरिपाटि-समर्थितमत्र नायके श्रीकृष्णेऽपि सम्यक् सञ्जाघटीति इति कृत्वा नायकोऽयं धीरोदात्त इति राद्धान्तं स्थापयितुं सर्वथा समर्था वयम् परं च प्रथिते संस्कृते साहित्ये नाटकेषु काव्येष्वपि प्रायः श्रीकृष्णाख्ये नायके धीरललितत्वमेव उपवर्ण्य रसश्चर्व्यते सहृदयैः । अग्रे च धीरललितलक्षणम् समुपस्थाप्य तदनुचिन्तनमपि अस्माकं नायके कर्तुं शक्यते इत्येव वैलक्षण्यमस्माकं नायकस्य आबालगोपालप्रथितस्य श्रीकृष्णस्य, तल्लक्षणं यथा—

'निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ।।३।४०।। सा० द०

इत्येतत् कविराजलक्षणानुसारेण धीरललितो नायको निश्चिन्तो भवेत् । सत्स्वपि युद्धाद्यापत्समूहेषु सर्वथा चिन्तया नाकुलो भवेत् । किञ्च धीरललितो हि नायको सचिवायत्तो विशेषतः सर्वमपि राजभारं तत्स्कन्धे निधाय स्वयं ललितकलाविलासलास्यलीनो भवति । राज्ये सम्भूयमाने महोत्सवे एव प्राधान्येन तस्य रुचिरुपजायते परन्त्वस्माकं काव्ये नायकः कदापि लीलाविलासाभिलाषी न प्रदर्शितः । प्रजारञ्जनात् कदापि न विमुखायते । रुक्मिणीहरणानन्तरं रुक्मिणा भयङ्करप्रलयङ्करसङ्गरमातनोति । गीतवादित्रनृत्यादिलालित्यलीलाकलितासु कलासु नहि वैशिष्ट्येनानुरज्जते । भाव्यं च धीरललितेन नायकेन भोगविलासितायां निमग्नेन सर्वथा । किन्तु श्रीकृष्णः जरासन्धेन सार्द्धं सप्तदशकृत्वा युद्ध्यते तत्कालीनं पापाचारपरायणशिरोमणिं कंसं स्वयमेव हन्ति । एवं च धीरललितत्वगुणः सर्वथाऽस्मिन् काव्येऽस्माकं नायके श्रीकृष्णे संगमयितुं न शक्यते काव्यान्तरेषु धीरललितत्वोपादनेन तस्मान्नायकात् सहृदयहृदयरसश्चर्वितो भवेत्, तत्त्वन्यत् । यद्यपि दशरूपककारेणोक्तं—

'औदात्यं हि नाम सर्वोत्कर्षेण चित्तवृत्तिः, तच्च विजिगीषुत्व एवोत्पद्यते इति । द० रु० । ४ ।

तदपि कविना रुक्मिणीमङ्गलकाव्ये नायकस्य कृष्णस्य सर्वोत्कृष्टता चातुर्येण चित्रिता । गुणश्चायं सर्वोत्कर्षाख्यो विजिगीषावेव समुपलभ्यते । वर्तते च कृष्णे सर्वाभिभवकारिता विजिगीषुतापरपर्याया सर्वोत्कृष्टता । स रुक्मिजरासन्धप्रभृतीन् दुराचारिवर्गान् जेतेति नियतं विश्वसिति

---

१. ऋ० मं० १०।६८

(६।२४) । रुक्मिणीहरणान्तरमनुधावकान् आक्रमणाभिलाषुकानपि अक्लेशेन जेष्यतीति भावनाभराक्रान्तोऽस्माकं नायक. सर्वथा विजिगीपुरेव । एवं च धनञ्जयमतसिद्धौदात्यस्य नात्यनौचित्यावहः प्रयोगः । एतेनायातमस्माकं नायकः साहित्यलक्षणोपेतः धीरोदात्तः इति ।

लक्षणग्रन्थानुसारेण महाकाव्यत्वसिद्धये शृङ्गारवीरशान्तान्यतमः रसः प्रधानरूपेणावश्यमेव भवति रसान्तराणि तस्य प्रधानभूतस्याङ्गभूतानि भवन्ति अस्माकं रुक्मिणीमङ्गलमहाकाव्येऽपि अङ्गीरसः शृङ्गारः नितरां शोभते । तत्रापि महनीयता कमनीयता चाप्यस्य काव्यस्य यच्छृङ्गारस्य विप्रलम्भरूपमेव विपुलांशेन विलासितं दरीदृश्यते । काव्येऽस्मिन् नायिका रुक्मिणी भीष्मजा कुमारी सर्वथा कृष्णाऽनुरक्ता तदैकव्रतिका सर्वथा स्वात्मानं तच्चरणारविन्देष्वेवाहर्निशं पतिरूपेण भजमानं समीहते परं भ्राता रुक्मी तां भगिनीं ततः विप्रतिषिद्ध्यति । तस्य भ्रातुः परतन्त्रतामनुभूयमाना रुक्मिणी स्वस्य भ्रातुः शिरोवेदनारूपेण काव्ये चित्रिता दृश्यते भ्रर्तुविरोधेनैव तस्याः उद्वाहः कृष्णेन ह न निश्चितः प्रत्युत तद्विरोधिना शिशुपालेन सहोद्वाहं कर्तुं भ्राता रुक्मी सर्वथा सन्नद्ध प्रतीयते । यद्यपि अनेन रुक्मिकृत्येन तत्पितरौ न सर्वथा सङ्गतौ रुक्मिणी तु तदपायविक्लवा अहर्निशं कृष्णैकमानसा अस्ति । नायको भगवान् श्रीकृष्णोऽपि प्रेमिकायाः सर्वदा सहचारिण्याः रुक्मिण्या निदेशानुसारेण हठात् लीलाविहारी तामपहरति । एतत् सर्वचित्रणमानवसर्गं विप्रलम्भशृङ्गारस्यैव । अत्र विप्रलम्भः सर्वदा परिपक्वः सहृदयजनास्वादयोग्यः सन्नन्यान् रसानङ्गरूपेण स्वीकुर्वन् कामपि काव्यीयच्छटां विच्छुरति । शृङ्गारस्य संयोगपक्षो दशमे सर्गे रुक्मिणीकृष्णसंयोगेन पाठकानां श्रीकृष्णं च पुरत आयाति । काव्येऽस्मिन् अङ्गिरसस्य शृङ्गारस्य वीररौद्रहास्याद्भुद्भयानकादिरसा अङ्गरूपेण यथायोगं यथास्थानमनुद्वेलकरूपेण विन्यस्ताः वर्तन्ते ।

नाट्यशास्त्रे शृङ्गाररसस्य भेदद्वयं प्रतिपादितम् ।[1] किन्तु दशरूपककारधनञ्जयस्तस्य प्रकारत्रयं निर्दिशति ।[2]

किन्तु प्रायः सर्वेषु लक्षणग्रन्थेषु सम्भोगविप्रलम्मइति रूपद्वयेनैव

---

१. ना० शा० ६।४५

२. दु० रू० ४।५८

श्रृङ्गाररसो लक्षितः प्रथितश्च तत्रापि सर्वत्रग्रन्थेषु विप्रलम्भशब्द एव प्रयुक्तो वर्तते ।

अयोगवियोगप्रभृतिशब्दानामेतदर्थे प्रयोगो न प्रचलितः । न वा लक्षणकारैरभिमतः किन्तु दशरूपककारः एतद्विरुद्धचते । तदनुसारं विप्रलम्भाख्ये भावे वञ्चनायाः प्राचुर्यं भवति । तद्यथा टीकाकर्तुर्धनिकस्य वृत्तौ सुस्पष्टं प्रतिपादितम्—

> "अयोगविप्रयोगविषयत्वाद्विप्रलम्भस्यैतत्सामान्याभिधायित्वेन विप्रलम्भशब्द उपचरितवृत्तिर्माभूदिति न प्रयुक्तः तथाहि—दत्त्वा संकेतमप्राप्ते अवध्यधिक्रमे साध्येन नायिकान्तरानुसरणाच्च विप्रलम्भशब्दस्य मुख्यप्रयोगो वंचनार्थत्वात् ।"

प्रकृतेऽस्माकं महाकाव्ये कविना रुक्मिणीकृष्णयोः श्रृङ्गारस्य यश्च पक्षः विप्रलम्भाख्य प्रस्तुतः स धनञ्जयमतेनायोगनामकः परिभाषितुं शक्यते ।

एतल्लक्षणानुसारं भ्रातुः पारतन्त्र्येण भैष्म्याः कृष्णवियोगवर्णनात् दशरूपकमतेनायोगाख्यविप्रलम्भो वर्तते । परं च सामान्यरूपेण विप्रलम्भशब्देनैवास्य रसस्य सङ्कीर्तनं समीचीनमेव । यद्यपि विप्रलम्भस्य भेदान्तराण्यपि प्रतिपादितानि । यथा कविराजविश्वनाथेन रसस्य प्रकारचतुष्टयी स्वीकृता—

पूर्वानुरागो मानः प्रवास करुणात्मकश्चेति । एतल्लक्षणं यथा—

> 'यत्र तु रतिप्रकृष्टानामभीष्टमुपैति विप्रलम्भोऽसौ ।
> स च पूर्वरागे मानप्रवासकरुणात्मकश्चतुर्धा स्याद् ।।सा० द०।।

रुक्मिणीमंगले साधूपवर्णितः रुक्मिणीकृष्णयोः पूर्वानुरागः। संयोगात्पूर्वं नायिकानायकयोर्मनसि संयोगोत्कण्ठाप्रयुक्तव्याकुलता एव पूर्वरागः पूर्वानुरागो वाभिधीयते। अयमपि चतुर्धा कथितः—चित्रदर्शनं गुणाश्रवणं स्वप्नदर्शनं प्रत्यक्षदर्शनमिति । काव्यप्रकाशतृतीयोल्लासेऽपि पूर्वानुरागस्य चतुर्विधत्वमेवाभिहितम्—अभिलाषः ईर्ष्या प्रवासः शापहेतुकश्चेति । एवं च आचार्याणां लक्षणसन्दर्शनेनेदमायाति यत् साहित्यदर्पणस्य पूर्वानुरागः काव्यप्रकाशस्य अभिलाषरूपश्च विप्रलम्भश्रृङ्गाररसोऽस्माकं महाकाव्ये रुक्मिणीकृष्णमधिकृत्य वर्णितो वर्तते। अयं च रसः नायक-

नायिकायोर्मिथो गुणाश्रवणेनाङ्कुरितः पल्लवितः पुष्पितश्च सौरभायते। अयं च विप्रलम्भः दशमे सर्गे गिरिजालये कृष्णसन्दर्शनेन सह संयोगरूपेण च परिणमते। संयोगश्शृङ्गारश्चापि अस्मिन् दशमे सर्गे यथायोगं वर्णितम्। अस्य अङ्गिरसस्य शृङ्गारस्य रौद्रवीराद्भुद्भयानकहास्यप्रभृतयो रसाः सम्पूर्णेऽस्मिन् महाकाव्येऽङ्गरूपेण प्रवाहिताः सन्ति। एवं च--

"शृङ्गारवीरशान्तानामेकोऽङ्गीरस इष्यते॥ अङ्गानि वा सर्वेऽपि रसाः --

इदमपिलक्षणमस्माकं महाकाव्ये सम्यक् सङ्गच्छते। सर्वे नाटकसन्धय इति विश्वनाथोक्तमहाकाव्यलक्षणानुसारेण प्रकृते रुक्मिणीमङ्गलमहाकाव्ये सर्वे च ते सन्धयो यथास्थानं सन्धानिताः सन्ति, ये नाटके चारुचमत्कारोत्पादकत्वेन आवश्यका भवन्ति।

कविराजीयकाव्यलक्षणस्य इतरद्विशेषणम्—'इतिहासोद्भवं वृत्तम्' इति एतदनुसारमस्माकं रुक्मिणीमङ्गलमहाकाव्यमपि हरिवंशमहापुराणस्य रुक्मिणोहरणवृत्तान्तमधिकृत्य पल्लवितं पुष्पितं च प्रतिभाति। यद्यपि रुक्मिणीहरणं रुक्मिणीकृष्णविवाहश्च महाभारते यत्र तत्र अङ्गरूपेण परिचर्चितौ परं क्रमबद्धरूपेण व्यासीकृत्य कथानकमिदमादौ हरिवंशमहापुराणे एवोपलभ्यते। एवञ्चास्माकं 'महाकाव्यवृतस्येतिहासोद्भवत्वं साधु सङ्गमयितुमस्माभिः शक्यते।

**अपरं च विशेषणं काव्यलक्षणे—**

'चत्वारस्तस्यवर्गास्स्युस्तेतेप्येकं च फलं भवेदिति रुक्मिणीमङ्गले धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु तृतीयः काम एव महाकाव्यफलमवबोधनीयम्। निखिलेऽस्मिन् महाकाव्ये अस्ति यद्यपि अन्योऽपि वर्गो यथा रुक्मिण्याः आस्तिक्यभावना दृढसंकल्पः पातिव्रत्यं तत्पित्रोर्वैदिकधर्मानुष्ठानशुभपरिपाकप्राप्तिप्रत्याशा तदनुष्ठानादिवर्णनं च धर्मे वर्गे परिगन्तुं शक्यते। एवमेव राजनैतिकार्थिकदृष्ट्या रुक्मिणीहरणमस्माकं नायकस्य कृते अर्थाख्यपुरुषार्थोपवृद्धये सम्यक् सङ्कल्पितमेव। पुनरपि धर्मार्थौ स्वस्थानोचितावफलत्वेनैव प्रदर्शितौ वर्तेते। महाकाव्यफलं तु एकः काम एव यश्च मिथोऽनुरक्तयो रुक्मिणीकृष्णयोर्विवाहरूपेण परिणमन् काव्यमिदं परिपूर्णतामानयति।

महाकाव्यत्वसिद्धये परश्च निर्देशः साहित्यदर्पणे विहितस्तद्यथा—

'आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा'। इत्येतदनुसारं आशीर्नमस्क्रिया वस्तुनिर्देशान्यतरेण मङ्गलाचरणेनावश्यमेव काव्यं भावनीयम्। रुक्मिणीमङ्गले ग्रन्थादौ इष्टगुरुदेवनमस्कारात्मकं मङ्गलमिति कर्त्तव्यतया समारम्भेण सम्पादितं वर्तते। अस्माकं कविवर्यस्य बालमुकुन्द-भट्टस्य पुष्टिमार्गवीक्षिततया तत्सम्प्रदायप्रवर्तकत्वेन पुण्यश्रवणकीर्तन आचार्यो वल्लभः प्रथमश्लोके स्मरणेन सभाजितो नमस्कृतश्च ततस्तत्सुतो विट्ठलः तदीशो भगवान् कृष्णोऽस्माकं नायकः श्रीकृष्णश्च एतदनु विस्तरेण सङ्कीर्तितः संस्तुतश्च। एवं चेष्टागुरुदेवानां नमस्काररूपं मङ्गलाचरणं समारोहेनाचरितमस्ति।

८. महाकाव्यस्यैकमन्यदपि विशेषणं लक्षणग्रन्थे प्रोक्तम्, तद्यथा दर्पणे—

'क्वचिन्निन्दाखलादीनां सतां च गुणकीर्तनमिति।

अस्माकं रुक्मिणीमङ्गलमहाकाव्येऽपि स्थले स्थले प्रतिनायकस्य रुक्मिणः तत्सहयोगिनामिति शिशुपालजरासन्धादीनां निन्दाथ च नायकस्य श्रीकृष्णस्य नायिकायाः रुक्मिण्या भीष्मवलरामप्रभृतीनां सतां प्रशंसा च वहुशः कृता वर्तते। किञ्च भैष्मीष्टसिद्धौ सहायकः शिवनाम-विप्रोऽपि साक्षान्नायिकया संस्तुतो वर्तते। एवं च खलानां निन्दा सतां च गुणकीर्तनमत्र काव्ये सम्यगवलोकयितुं शक्यते।

९. पण्डितराजेन महाकाव्यत्वसिद्धये अन्यदपि प्रतिज्ञातं वर्तते यथा—

'एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैरिति॥

परमिदं लक्षणमस्माकं महाकाव्ये रुक्मिणीमङ्गले न सङ्घटते। नन्वेतदभावे काव्येऽस्मिन् दोषः स्यादिति चेन्न। विश्वनाथातिरिक्तैर्दण्डी-भामहरुद्रटप्रभृतिभिराचार्यैः स्व-स्व लक्षणग्रन्थेषु एवं भूतस्य वृत्ताश्रितस्य लक्षणस्यानुल्लेखात्। एतेनायातं यत् महाकाव्ये निखिले सर्गे एकमेव वृत्तं पर्यवसाने च वृत्तपरिवर्तनं न परमावश्यकमिति। आचार्यवर्यस्य रुद्रटस्य विषये एवं प्रथितं किल तेन महाकाव्यीयव्यापकापेक्षिकतत्त्वान्येवो-

ल्लिखितानि । पूर्वाचार्यप्रोक्ततत्त्वानामङ्गीकरणेन सहैव निरपेक्षतत्त्वानां परिवर्जनमपि आचार्यवर्यैरकारि । तेन महाकाव्यमलङ्कारवहुलं विधातुं न तथा प्रयतितम् । महाकाव्यस्य वाह्याङ्गसम्वन्धितत्त्वानां मङ्गलाचरणं सर्गसंख्या, प्रत्येकस्मिन् सर्गे वृत्तपरिवर्तननिर्देशः विशिष्टः छन्दः प्रयोगनिर्देशः, सर्गान्ते वृत्तपरिवर्तनमित्येवमादयो विषयाः लक्षणकोटी न समाहिताः किञ्चाचार्यवर्येण दण्डिना तु केवलम् श्रव्यवृत्तैरित्येवोक्त्वा छन्दः कथावशेषतां नीता । अपि च यत्तु पण्डितराजो विश्वनाथः—

'नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ।' इति छन्दोविषये निगदति, अनेकेषां काव्यशास्त्रिणां नेदं प्रधानमावश्यकं च तत्त्वम् । तस्मात् सर्गान्ते वृत्तापरिवर्तनं न दूषणं प्रत्युद्भूषणमेव ।

१०. यत्तु काव्यलक्षणे पण्डितराजेन 'सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्' इत्युक्तं तदपि महाकाव्येऽस्माकं साधु संजाघटीति । यद्यपि पूर्वाचार्यैः काव्यलज्ञणे एतन्नोक्तम् ।

११. इत्थमेव महाकाव्येषु प्राकृतिकवर्णनमपेक्षितं भवति, तदुक्तं पण्डितराजेन —

'सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ।
प्रातर्मध्याह्नमृगया शैलर्तुवनसागराः' ।। सा० द० ।।

परमिदं लक्षणमस्मिन्महाकाव्ये नैव साकल्येन संगमयितुं शक्यते । महाकाव्यान्तरेष्विव प्रकृतेऽस्मिन् महाकाव्ये एनेषां प्राकृतिकवस्तूनां चित्रणस्याभाव एव प्रतीयते । एतेन इदमेव स्पष्टायते कविना महाकाव्यमिदं पौराणिकशैलीं समाश्रित्य व्यरचि । रुक्मिणीकृष्णयोरुद्वाहस्य कथावस्तु अविच्छिन्नप्रवाहेण महाकाव्येऽस्मिन् निवद्धं कृतमस्ति ।

१२. एवमेव सम्भोगविप्रलम्भौ श्रृङ्गारस्य मुनिस्वर्गाध्वरप्रभृतयः पदार्थाश्च महाकाव्ये उपनिवन्धनीयमिति ह लाक्षणिकः समयः । तद्यथा पण्डितराजेन —

**'सम्भोगविप्रलम्भौ मुनिस्वर्गपुराध्वराः'** इत्येतदनुसारमस्माकं महाकाव्यस्यादौ श्रृङ्गारस्य विप्रलम्भः पर्यवसाने च भैष्मीकृष्णयोः संयोगः प्रदर्शितो वर्तते । एवं च देवर्षिनारदोऽपि पात्रत्वेनचित्रितः यद्यपि नास्ति स्वर्लोकस्य वर्णनं पुनरपि द्वारिकापुर्य्याः यत्र कुत्रचित् स्वर्गेण तुलना विहिता

वर्तते। द्वारिकापुर्याः आलङ्कारिकं चित्रणं महाकाव्यस्य द्वितीयसर्गस्य तृतीयचतुर्थपञ्चमश्लोकेषु।पञ्चमसर्गस्य प्रारम्भिकेषु षट्सु श्लोकेषु च वर्णनं तन्मार्गस्योल्लेखं च चित्रितमस्ति। इत्थं च वक्तुं शक्यते यत् स्वर्गपुराध्वराणां वर्णनं महाकाव्येस्मिन् समासेनैव सम्पादितमस्ति।

१३. महाकाव्यत्वसिद्धये आचार्याणां सम्मतिः यद्यथायोगं रणप्रायणादीनामपि वर्णनेन काव्ये भाव्यं तद्यथा दर्पणे—

'रणप्रयाणोपयममन्त्रोदयादयः
वर्णनीया यथायोग्यं सागोपांगा अमी इह।

अस्माकं रुक्मिणीमङ्गलमहाकाव्येऽपि जरासन्धादिवीरभटानां रुक्मिणीहरणान्तरं कृष्णेन सह योद्धुं रुक्मिणश्चापि रणप्रयाणं कविना साधु निबद्धम्। कृष्णस्य शिशुपालस्य च सेनायाः मिथः सङ्करः कृष्णरुक्मिणोश्च परस्परं युद्धः साधुर्वर्णितः। रुक्मिणीविवाहस्य पूर्वं सज्जापर्य्यन्ते च तस्या हरणं ततः कृष्णेन विधिवदुद्वाह इत्येते विषया सहृदयजनमनोमोहनत्वेन सम्यग्वर्णितास्सन्ति। एवमेव रुक्मिण्याः कृष्णं निकषा पत्रं प्रेषितुं सख्या सह मन्त्रणा अथ च तत्प्रेषितदूतेन शिवाख्यविप्रेण सह कृष्णस्य कुण्डिनपुर समागममन्त्रणा चापि साधु लिखिता वर्तते, एवं च पूर्वोक्तलक्षणप्रोक्तविषयाणां यथायोगवर्णनं समुपलभ्यते।

१४. काव्यस्याभिधानविषये काव्यशास्त्रिणां सम्मतिः यथा—

'कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा।
नम्नः सर्गोपादेय कथया सर्वनाम तु'॥

एतदनुसारं काव्यस्य वृत्तं रुक्मिणीविवाहमेव समाश्रित्य एव अस्माकं महाकाव्यस्याभिधानं रुक्मिणीमङ्गलमिति विहितम्। परमत्र एतावान् भेदः यदत्र कथामालक्ष्य सर्गस्य नामकरणं नास्ति, केवलं सर्गसंख्यानामेवोल्लेखो विद्यते।

१५. महाकाव्ये नायकस्य सर्वोत्कर्षः तच्छत्रूणां च खलनायकादीनां पराजयोऽवश्यमेव प्रदर्शनीयतामावहतः। तद्यथा दण्डिना प्रोक्तम्—

'गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम्
निराकरणमित्येष मार्गः प्रकृतिसुन्दरः॥' काव्यादर्शः॥

अपि च भामहेनापि कथितम्—

नायकं प्रागुपन्यस्य वंशवीर्यश्रुतादिभिः ।
तस्यैव बधं ब्रूयादन्योत्कर्षाभिसंधित्सया ॥

काव्यालङ्कारः प्रथमपरिच्छेदः ।

इत्येतल्लक्षणमाश्रित्य महाकाव्येऽस्मिन् कृष्णस्य गुणान् पूर्वमुपस्थाप्य पर्यवसाने रुक्मिजरासन्धादिशत्रूणामुपरि विजयं च प्रदर्शितवान्। एवं च आचार्यविश्वनाथस्य सर्वसम्मतमहाकाव्यलक्षणं यद्यपि प्रकृतेऽस्मिन् रुक्मिणीमङ्गले काव्ये कृत्स्नरूपेण न खलु सङ्गच्छते तथापि तदुक्तं तल्लक्षणं प्रायेणात्र सञ्जाघटीत्येवेति वक्तुं पार्यते।

यद्यपि महाकाव्येऽस्मिन् कविराजीयलक्षणानुसारेण न्यूनता वक्तुं शक्यते परं न सा दोषावहा। यतोहि काव्यशास्त्रिणामन्येषां काव्यलक्षणानि काव्यस्यास्याध्ययने दृष्टिगतानि क्रियते तदा तासां न्यूनतानां यत्र कुत्र-चिदवश्यमेव परिहारः सम्भवत्येव। आचार्यविश्वनाथात् पूर्ववर्तिषु आचार्यो-रुद्रटोऽधिकेन समन्वयात्मकदृष्टिसंयुतः सम्मन्यते। स हि स्वकीये महाकाव्यलक्षणे अग्निपुराणभामहदण्डिप्रभृत्याचार्याणां काव्यलक्षणानि समन्वेति। अतएव आचार्यो रुद्रटः एकोऽद्वितीयः विशिष्टः काव्य-शास्त्रीति वक्तुं शक्यते। स्वकीये महाकाव्यलक्षणे आचार्यवर्येण तेन महदुद्देश्यं महच्चरित्रं महती घटना समग्रजीवनस्य रसात्मकस्य जीवनस्य रसात्मकं चित्रणं चेत्यावश्यकानि चत्वारि तत्त्वान्येव समुल्लिख्याचार्या-न्तरेभ्यः स्वात्मा पार्थक्येन समवस्थापि। एवं च रुद्रटप्रोक्तान्नुपर्युक्तानि चत्वारि तत्त्वानि आलक्षीकृत्य महाकाव्यस्यास्य विवेचनं क्रियेत तर्हि महाकाव्यत्वसिद्धयेऽस्मिन् संशयस्य किञ्चिदप्यास्पदं न स्थापयितुं शक्यते। तथाहि महाकाव्यस्यास्य महदुद्देश्यं किल विदर्भराजभीष्मतनयायाः रुक्मिण्याः कृष्णेन सह विवाहसम्पादनम्, रुक्मिशिशुपालप्रभृतिविरोधिनां दर्पनाशप्रदर्शनं च। महच्चरित्रं खलु काव्येतिहासपुराणादिषु प्रथितं सत्त्वतनोर्हरेरवताररूपेण वर्णितं वसुदेवापत्यं देवकीगर्भसम्भूतं द्वारिकाधीशं भगवन्तं श्रीकृष्णमेवोपगच्छति।

महती घटना चात्र रुक्मिकृतमहत्सुरक्षायां सत्यामपि कृष्णेन रुक्मिणीहरणं रुक्मिपराजयश्च स्तः। समग्रजीवनस्य प्रायः रसात्मकं

चित्रणमपि महाकाव्येऽस्माकं संजातं वर्तते। यद्यपि सामग्र्येण तज्जीवनं न चित्रितं, आंशिकवर्णनमेव, पुनरपि तेन सहृदयहृदयाह्लादिचारुचमत्कार-कारिचित्रणम् अस्त्येवेति नास्ति संशीति लेशः।

महाकाव्यविषयकपाश्चात्यधारणावलोकनानन्तरमपि स्पष्टमिदं भवति यद्रुक्मिणीमङ्गलस्य महाकाव्यत्वे न संशयः। प्रसिद्धविदुषः 'अरस्तु' इत्याख्यमहाभागस्य दर्शनिकस्य महाकाव्यलक्षणविषये विचारः द्रष्टव्यः[१]। अर्थात् 'नाट्यस्यान्वितियुक्तता सिद्धान्तानुसारमेव। यस्मिन् समग्रं पूर्णं च किञ्चिदेकं कार्यमादिमध्यान्तयुक्तत्वाज्जीवधारीव प्रतीयते।

इत्थं च तत्काव्यस्वरूपमत्र विशिष्टमेवाह्लादकारकमिति। 'एवं पाश्चात्यस्याप्यरस्तुमहाभागस्य काव्यलक्षणमस्मिन् महाकाव्ये सङ्घटते एव (Character of Higher Type. P. 21)।

महच्चरित्रमर्थादुच्चतरकोटेर्नायकस्यावश्यकता विषये रुद्रटादि-वदरस्त्वपि वक्ति।

जीवनस्य विविधव्यापाराणां यथा युद्धक्रान्त्यन्वेषणदुर्घटनादीनां वर्णनविषयत्वं यत्तु रुक्मिणीमङ्गले अस्त्येव, अपि च भारतीयकाव्यशास्त्रे प्रतिपादितप्रयोजनं उद्देश्यमिव लोकाय सकलप्रयोजनमौलिभूतमानन्द-वितरणम्। एवं रुक्मिणीमङ्गले यत्र भगवतः श्रीकृष्णस्य रुक्मिण्याश्च विविधवाधानन्तरं संयोगो विवाहश्च भवतामानन्दयति तत्रैव काव्यमर्मज्ञेभ्यो रसभावानुभूत्यादयोऽपि नन्दन्त्येव। अन्यपाश्चात्यकाव्यशास्त्रिणां लक्षणा-वलोकने सत्यपि यानि निम्नलिखितसामान्यलक्षणानि दर्शनीयानि, सर्वथा महाकाव्यलक्षणानुरूपाण्येव रुक्मिणीमङ्गले सङ्घटन्ते च—

---

१. ............to be constructed to on dramatic principles. It should have for its subject a single action, whole and complete, with a begining a middle and an end. It will thus resemble a single and coherent organism and produce to it. (Aristotle's theory of poetry and fine arts. A. B. Butcher. M. P. 4th Edition London, 1927 page 89-91).

१. महत्त्वपूर्णं लोकविश्रुतं व्यापकं च कथावस्तु ।

२. इतिहासविख्यातनायकः उदात्तगुणयुक्तः विजयी राष्ट्रप्रतिनिधिश्च स्यादिति । एतत्सर्वमस्मिन् महाकाव्ये अस्त्येव ।

इत्थं पाश्चात्यभारतीयमहाकाव्यानां मूलतत्त्वानां परीक्षणे सति निष्कर्षोऽयमायाति यदुभयोर्मध्ये काव्यरूपरेखारचनाशैलीयत्र तत्र परस्परानुरूपा एव । अस्मिन् विषये पाश्चात्यकाव्यशास्त्री 'डिक्सनः' पूर्णरूपेण स्वाभिरुचिं प्रदर्शयति[1] । एतेषां लक्षणानामध्ययनेन ज्ञायते यद् भारतीयकाव्यशास्त्रेषु वाह्यांगविषयकस्थापितलक्षणानि एतावन्ति सन्ति चर्चितानि येन महाकाव्यस्यात्मा तत्स्थिरलक्षणं चोपेक्षाभावमापद्येते, अर्थात् काव्यशरीरमेव भूयस्त्वेनैभिः प्रतिपादितम्, नत्वात्मा प्रामुख्येन पदमाधत्ते अस्थायिलक्षणानां वैपुल्यादेव काव्यात्मनः वास्तविकं स्वरूपं नन्दायन्ते इव । अतएव महाकविभिरीदृशानि काव्यलक्षणानि अनुसृत्य महाकाव्यस्योदात्तं स्वरूपमन्तर्हितम् । तत्स्थाने अलङ्कृतं कृत्रिमरूपमेव उदजीघटत । एवं च रामायणमहाभारतकथामुपजीव्यवाह्याङ्गविषयकलक्षणोपहितं किमपि काव्यं महाकाव्यपदं स्वीकृतवान् । किञ्च व्याकरणशास्त्रज्ञानाय साहित्यशास्त्रवोधनाय वा उदाहरणरूपेण रचितानि भट्टिकाव्यप्रभृतीनि द्वित्रिसन्धानात्मकानि श्लोकवद्धानि पुस्तकान्यपि महाकाव्यत्वकोटौ गणितानि जातानि ।

महाभारते भागवते च वर्णितायाः शिशुपालवधकथायाः यद्यपि कोऽपि गभीरोऽर्थः नूतनं तत्त्वं, प्रतीकात्मकं चित्रणं वा न विहितं पुनरपि

---

१. Yet heroic poetry is one. whether of the East or West, the North or South, its blood and temper are the same and the true epic, whenever created, will be a narrative poem organic in structure, dealing with great actions and great characters in a style commensurate with the lordliness of its theme, which tends to idealize these characters and actions and to sustain and embellish it subject by means of episod and amplification.

(M. Pison. English Epic and heroic poetry page. 24).

आलङ्कारिकवाह्याङ्गरचनामात्रेण विविधशास्त्रपाण्डित्यकल्पनाप्रदर्शन-मात्रेण च माघः कवीनां महाकविः तत्काव्यं च महाकाव्यमिति कथ्यते जनैः। अतः वास्तविकमहाकाव्यस्य रूपं ज्ञातुं पूर्वं तत्र काव्यत्वाधायक-स्थिरतत्त्वानां परिज्ञानमावश्यकम् इति। कृत्वा भारतीयविबुधानां मतेन तत्स्वरूपमधः स्थले प्रदीयते।

चतुरोदात्तः नायकः, चतुर्वर्गफलप्राप्तिः रसनिष्पतिः प्रख्यातेतिहासो-द्भूतता, तथ्याश्रितं कथावस्तु च, कथात्मकता छन्दोवद्धता, सन्ध्यंगसंयोजना जीवनस्य विविधविषयस्य स्वरूपाणां चित्रणमुदात्ता च शैली इति।

काव्यशास्त्रेषु लक्षणप्रतिपादनपरैराचार्युरुपर्यक्तानि तत्त्वानि सर्वैः स्वीकृतानि। तथा चात्रोल्लिखितानि तत्त्वानि प्रायः सर्वाणि रुक्मिणीमङ्गल-महाकाव्ये घटितानि द्रष्टुं शक्यन्ते।

इत्थं विवेचनानन्तरं ज्ञायते यत् काव्यशास्त्रिभिः प्रतिपादितानि सर्वाणि काव्यतत्त्वानि अस्मिन् काव्ये मिलन्ति, यानि च नोपलभ्यन्ते तैरस्य महाकाव्यस्य न किञ्चिद्धीयते।

उक्तं हि आचार्यवर्येण दण्डिना—

'नूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति'।। काव्यादर्श।।

इत्थं रीत्या रुक्मिणीमङ्गलं महाकाव्येन, अत्र न कश्चिद्विसंवादः।

## रुक्मिणीविवाहमधिकृत्य कृतानि संस्कृतकाव्यानि तेषु रुक्मिणीमङ्गलस्य स्थानञ्च

श्रीमद्भागवतमहापुराणोपवर्णितं रुक्मिणीविवाहमधिकृत्य लिखि-तानि श्रव्यानि दृश्यानि च यानि विश्रुतानि काव्यानि समुपलभ्यन्ते तान्यत्रोल्लिख्यन्ते।

वालकृष्णभट्ट-शेषचिन्तामणिसरस्वतीनिवासैः रुक्मिणीपरिणयमित्ये-वाभिधं नाटकत्रयम्, रामवर्मरमापतिउपाध्याय-विश्वेश्वर-आत्रेयवरद-तार्किकसिंहैः रुक्मिणीपरिणयमित्येव नाम्ना समुपलब्धं नाटकपञ्चकम्,

वत्सराजकृतमीहामृगम्, प्रधानी वेङ्कटम्पतिना कृतः रुक्मिणी स्वयंवरः अङ्कः, वि० प० वोकील महोदयविरचितं 'श्रीकृष्णरुक्मिणीयम्' नाटकम्, हरिदाससिद्धान्तवागीश-काशीनाथशर्म-हेमचन्द्रराय-महोदयैः रुक्मिणीहरण-मित्येवाभिधं कृतं महाकाव्यत्रयम् विश्वनाथदेवर्म्मणा विरचितं रुक्मिणी-परिणयम् महाकाव्यम्, राजचूडामणिदीक्षितेन विरचित रुक्मिणी कल्याणम् महाकाव्यम्, तञ्जौरनरेशरघुनाथकृतः 'रुक्मिणीविवाहः, नृसिंहतातेन विरचितम्' 'रुक्मिणीवल्लभ परिणयम्, गोविन्दवाणीविरचितं' 'रुक्मिणी-पाणिग्रहणम्' एडावड्ढिकोड्माणस्य नम्बूद्रीपादस्य रुक्मिणीस्वयंवर-प्रबन्धः, गोवर्धनकृतं रुक्मिणीचम्पू, अम्मालवेङ्कटाचार्यकृतं रुक्मिणीपरिणय चम्पू, रामरायकृतं रुक्मिणीपरिणय चम्पू प्रभृतिकाव्यानि दृष्टिपथमागतानि।

रुक्मिणीविवाहमधिकृत्य कृतेषु काव्येषु उपर्य्युल्लिखितान्यथवा अन्यान्यपि यानि दृश्यकाव्यानि विरचितानि, तानि सर्वाणि यद्यपि अभिनेयत्वात् पाठकान् दर्शकान् च प्रभावयन्ति कथावस्तुदृष्ट्या स्वा-भाविकतया दूराण्येव तिष्ठन्ति। यतोहि रुक्मिणीविवाहकथायाः मूलस्त्रोतस्सु हरिवंश-ब्रह्म-विष्णु—श्रीमद्भागवतपुराणेषु सर्वाधिकं भागवत-पुराणमेव लोके धार्मिकपदवीं प्राप्नोत्, अपि च नायकस्यास्य पुराणस्य भगवतः श्रीकृष्णस्य सर्वाः लीलाः लोकः आध्यात्मिकरूपेण गृह्णाति, यदि सः रङ्गमञ्चे तस्मिन् कश्चिद्भेदं पश्यति स्वसंस्कारवशात् हृदयेन तं स्वीकर्तुं न क्षमते। यथा प्रो० वा० वोकील कृते 'श्रीकृष्णरुक्मिणीयम्' नाटके हलधरस्य कुण्डिनोपर्य्याक्रमणन् तेन सह तस्य पत्न्याः रेवत्या अपि कुण्डिनगमनम्, कविना यत् प्रदर्शितम् तन्नोचितम् यतो हि इतिहासे कस्मिन्नप्याक्रमणे पत्या सार्धं पत्न्याः गमनमनौचित्येन सह दुर्लभमपि। अपि चास्मिन्नेव नाटके भीष्मः कथयति यत् शिशुपालकृष्णयोर्मध्ये युद्धो भविष्यति तर्योजता एव रुक्मिणीवररूपे उचितः।

बालकृष्णभट्ट कृते 'रुक्मिणीहरणम्' नाटके यदा रुक्मिप्रेषितः ब्राह्मणदूतः शिशुपालसदनं प्राप्तस्तदा वसन्तकचन्द्रकाभिधानौ शिशुपाल-सेवकावेव तं कञ्चुकिनं रुक्मिण्याः पितुर्भीष्मस्य वैवाहिकीं चित्तवृत्तिं प्रष्टुमारभेते यत्कृते राजा एवोपयुज्यते। अतोऽत्र हास्यं प्रदर्श्य कविना नाटकमिदमुपहसनीयतां प्रापितम्।

एवमेव रामवर्म्मविरचिते 'रुक्मिणीपरिणयम्' नाटके कुण्डिनराजस्य अन्तः पुरे उद्धवः सखिभिः वार्तालापं कुर्वन् प्रदर्शितः। विविधनाटकेषु

प्रदर्शितमेतद्घटनाचक्रं पुराणेषु नोपलभ्यते । मनागप्येतादृगनौचित्यं 'रुक्मिणीमङ्गले' अस्माकं प्रकृतग्रन्थे न वर्तते। यत् किञ्चिदपि कथावस्तुनि पुराणेभ्योऽधिकं रुक्मिणीमङ्गलकारेण बालमुकुन्दभट्टेन समायोजितं यथा भीष्मकगृहे नारदागमनम्, रुक्मिण्याः मातुः कर्तव्यम्, जरासन्धेन गृहे एव रुक्मिण्या गिरिजापूजननिर्देशं न कुत्रचिदप्यनौचित्यमावहति ।

यद्यपि रमापति उपाध्येन विरचितस्य रुक्मिणीपरिणयम् नाटकस्य कथावस्तुनि न किञ्चिदनौचित्यम् तथापि हृदयपक्षे इदं रुक्मिणीमङ्गल-काव्यादनन्वमेव। एवं रुक्मिणीमङ्गलम् साहित्यिकदृष्ट्यापि उपर्युक्तेभ्यो ग्रन्थेभ्यो श्रेयस्करम् ।

श्रव्यकाव्येषु विश्वनादेवर्म्मणा कृते रुक्मिणीपरिणयम् महाकाव्ये भीष्मे रुक्मिण्या विवाहं कृष्णेन कर्तुं मनसि कृते यदा रुक्मी विरुद्धच शिशुपालमुचिततरं निर्दिशति तदा स स्वदुहितुः सुखमविचिन्त्य तस्य प्रस्तावं स्वीकरोति, रुक्मिण्याः मातापि पुत्रेण सम्मता भवति। पित्रोः कृते नेदमुपयुज्यते यतो ह्यस्मिन् काव्ये पितरौ स्वतनयां दुःखार्णवे क्षेप्तुमुद्यतौ। किन्तु रुक्मिणीमङ्गले इत्थं न, अपितु मातापितरौ रुक्मिणा न सम्मतौ, इदं त्वन्यद्यद्रुक्मी पित्रोर्वचनं भंक्त्वा हठात्स्वयमेव शिशुपालं रुक्मिणी-वररूपेणोद्घोष्य तस्य पितुरन्तिकं वैवाहिकफलदानादिकं स्वीकारयितुं ब्राह्मणान् प्रेषयति[1]। पश्चात्तु माता रुक्मिण्याः कृष्णेऽनुरागं संदृश्य कथयत्यपि यत् कृष्ण एव ते प्रणं रक्षतु, भीष्मोऽपि कृष्णं विलोक्य स्वेष्टदेवं प्रार्थयते यत् कृष्णो मे दुहितरं हरतु रुदन् गच्छेत्[2]। द्वारिकावरयात्रायां समागतायां एवं विधा साहसपूर्णोक्तिः दुहितुः सुखार्थिनः भीष्मस्य गौरवं पितृत्वं च सुरक्षयति स्वतनुजां प्रति सहजस्नेहं च प्रदर्शयति ।

रुक्मिणीपरिणये रुक्मिणी शिशुपालेन सह भाविनमात्मनो विवाह-मुपश्रुत्य दुःखिता सती सखीं प्रार्थयति यत् कंचिदाप्तब्राह्मणदूतमान्य यो मत्सन्देशं कृष्णान्तिकं नयतु रुक्मिणीमङ्गले रुक्मिणी गभीरस्वभावा आत्मनो व्यथां नोदीरयति प्रचारभयात्, अपितु स्वयमुपागतं ब्राह्मणं पत्रं दत्त्वा कृष्णान्तिकं प्रेषयति। अत्र कविना रुक्मिण्या गौरवं सुरक्षितम् मा

---

१. रु० मं० ३।४० ।
२. रु० मं० ८।३४ ।

केवलं ब्राह्मणमात्मनो व्यथां कथयति तदा स निगदति यदहं सहोदर इव। पत्रं लिख ते प्रियमानेष्यामि[१]। एवं यत्र तत्र विश्वनाथदेववर्म्मणा कृतं काव्यं रुक्मिणीमङ्गलाद्धीयत एव।

हेमचन्द्ररायेण कृते रुक्मिणीहरणमहाकाव्ये, एकस्मिन् दिने कृष्णो गुप्तचरेण सूचितः यल्लोकानुसारं स जरासन्धभयादेव समुद्रमध्ये बसति इति लोकवचनं निशम्य कृष्णः दुःखी दृश्यते। सर्वशक्तिमतः बुद्धिमतः सुविवेकिनः कृष्णस्य एवं विधं लोकवचनमाकर्ण्य दुःखं नोचितम्।

रुक्मिणीमङ्गले कृष्णः सर्वदा संतुष्टः सुखी च प्रदर्शितः स तु यत्केनाप्युपायेन रुक्मिणीदूतं ब्राह्मणं किमप्यविचिन्त्य परिणामं तोषयितुमुद्यतः। कृष्णो रुक्मिणीहरणे वाधकान् शाल्ववार्हद्रथजरासन्धादीन् जानन्नपि न भीतो न च दुःखी[२]। अपि च हेमचन्द्ररायेण कृते रुक्मिणीहरणे नारदः केवलं कृष्णं गत्वा रुक्मिणीमुद्वोढुं शंसति। किन्तु रुक्मिणीमङ्गले नारदः भीष्मस्यापि ग्रहमुपगत्य पूर्वमेव[३] कथयति यत् कृष्ण एव रुक्मिण्याः कृते उपयुक्तो वरः, पश्चात् ततः कृष्णं गत्वा रुक्मिणीपाणि ग्रहीतुं निर्दिशति[४]। इत्थं नारदः एकत्र रुक्मिण्याः कृते उपयुक्तं वरं सूचयति अपरत्र कृष्णं तां उद्वोढुं प्रेरयति।

रुक्मिणीमङ्गले भीष्मः आदर्शपितेव दुहितुः कृते वरान्वेषणो चिन्तानिमग्नः प्रदर्शितः[५]। इदं पाठकं श्रोतारं चाधिकतरं प्रभावयति किन्तु हेमचन्द्ररायस्य रुक्मिणीहरणे नैवं दृश्यते। कस्याश्चिदपि कन्यायाः विवाहे मातुर्भूमिका अतीव महत्त्वपूर्णा वर्तते यथा रुक्मिणीमङ्गले तृतीयसप्तमाष्टमदशमेषु च सर्गेषु विधिवत् प्रदर्शितम् किन्तु रुक्मिणीहरण मातुर्भूमिकायाः

---

१. रु० मं० ४।२४, २५।

२. रु० मं० ६।२३-२६।

३. रु० मं० ३।१७।

४. रु० मं० २।१२।

५, रु० मं० १।८।

अभावः, यन्नोचितः। इत्थं हेमचन्द्ररायस्य रुक्मिणीहरणस्योपर्य्येवास्य रुक्मिणीमङ्गलस्य स्थानमिति।

रुक्मिणी विवाहमधिकृत्य विरचितेषु हरिदासकृतम् 'रुक्मिणीहरणम्' काशीनाथशर्म्मणा कृतं रुक्मिणीहरणम् चोभावेव स्वकथावस्तुगत-साहित्यकनैसर्गिकहृदयहारिचित्रणाद्धुरिस्थितौ। ग्रन्थावुभौ अन्योन्यं प्रति स्पर्धित्वमुपगतौ वक्तुं शक्येते।

रुक्मिणीमङ्गलमहाकाव्यं तु कस्मिन्नपि क्षेत्रे उभयोः पश्चादेव तिष्ठति। राजचूडामणिदीक्षितविरचितं रुक्मिणीकल्याणम् महाकाव्यं यावन्मात्रमुपलभ्यते तस्मिन् साहित्यिकं सौन्दयं तु दृश्यते किन्तु कथा अतीव शिथिला वर्तते यस्माद्विस्मरति पाठकः पूर्वकथाप्रसङ्गे यतोहि मध्ये मध्ये मदनोपालम्भः पवनोपालम्भः, चन्द्रोपालम्भः इत्यादयो वर्णनविषयाः पूर्वापरयोः कथानकयोर्मध्ये अन्तरालं कुर्वन्ति।

रुक्मिणीमङ्गलमहाकाव्यं छन्दो महाकाव्यसिद्धान्तादीनतिक्रम्य तस्मिन् पारम्परिकसिद्धान्तकाले एव यन्नवीनसरणौ कविना कृतम् तस्मान्नूतनोद्भावनाः जायन्ते, अन्येषां कृते च निदर्शनमपि भवति। अतः यत्रकुत्रचित्तु ग्रन्थोऽयं कथावस्तुगतसुदृढयोजनावशात् सर्वानतिक्रम्य तिष्ठति। रुक्मिण्याः मातुरौचित्यपूर्णरीत्या कथायां नियोजनमतीव मर्मस्पर्शि[1]वर्तते अस्य स्थलस्य समता न कस्मिन्न ग्रन्थे रुक्मिणीविवाह-सम्बद्धे दृष्टिगोचरमेति। अष्टमे सर्गे विवाहसज्जाकाले यादृशः संवादः रुक्मिण्यास्तस्या मातुश्च मध्ये दृश्यते तदन्येषु काव्येषु दुर्लभः।

इत्थं पर्यालोचिते सिद्ध्यति यद्रुक्मिणीमङ्गलम् सर्वाणि काव्यानि प्रायोऽतिशेते तथापि हरिदास-काशीनाथशर्म्मणोश्च रुक्मिणीहरणाभ्याम् हीयते एव। अतः बालमुकुन्दभट्टकृतस्य स्थानं उपर्युक्तयोः पश्चादेव तिष्ठतीति मतम्।

तथापि एतेन महत्त्वमस्य काव्यस्य न किञ्चिदूनं भवति, यतोहि काव्यमिदम् अनेकेभ्यो रुक्मिणीविवाहसम्बन्धिग्रन्थेभ्यो विपरीतमेव

---

१. रु० मं० ३।१३, १४, ७।८, ९, १३।१६, २०, ८।२४, २६, ३१, ९।४६ ४७, १०।२६, २९, ३७, ४०।

रुक्मिणीकृष्णयोरुद्वाहं गान्धर्वरूपेण वर्णयति। अन्ये ग्रन्थाः प्रायोऽनयो-र्विवाहं राक्षसमेवोरीकृत्य कथयन्ति। अनेन राक्षसेन विधिनोपयमेन प्रथमं तु न कन्यासम्मानिता भवति अपरत्र लोकेऽस्य दुष्परिणामोऽपि।

अतः कविः बालमुकुन्दभट्टः जनानामदर्शनाराध्यं च श्रीकृष्णम् अन्येषां रुक्मिणोविवाहसम्बन्धिग्रन्थानामिव चित्रयितुमनुचितं मत्वा तयोरुद्वाहं समुचिततरेण गान्धर्वरूपेण वर्णयित्वा तयोश्चरित्रं तु गौरवं चकारैव, आत्मनः काव्यमपि महत्त्वपूर्णं विधाय लोके राक्षसोद्वाहस्य दुष्परिणामं निवारयितुं समाजसुधारकत्वेन स्थापयति।

# ।। श्रीरुक्मिणीमङ्गलाख्यं काव्यम् ।।

।। श्रीकृष्णाय नमः ।।

## प्रथमः सर्गः

—:०:—

वन्दे श्रीवल्लभाचार्यान् पुष्टिमार्गप्रवर्तकान् ।
यत्कृपालेशमात्रेण कृतार्थाः स्युः कलौ नराः ।।१।।

जीवानां क्लेशकर्मप्रकृतिगुणवृतस्वात्मनां श्रेयसे यः
कारुण्यात्कृष्णसेवादृशमिनवदसावर्पयन् गोभिरस्यन् ।
मायावादान्धकारं समभवदखिलेशो गृहे वल्लभस्य
वन्दे तं विट्ठलेशं जनशरणमहं भक्तक[ामाशुपू]रम् ।।२।।

यं नेति नेति गदति श्रुतिरात्ममूलं
यत्पादकल्पतरुमेव शिवाजमुख्याः ।
ध्यात्वाभवन् सकलकारणकारणं तं
भक्त्येकगम्यमभवं व्रजनाथमीडे ।।३।।

कृष्णेन्दुलीलाकिरणाननादि-
संसारघोरान्धतमो रिपून् वै ।
आत्मार्णवोल्लासकरान्नमामि
सुखप्रदान् भक्तचकोरपेयान् ।।४।।

अन्योऽन्यभाग्ययोर्भैष्मीकृष्णयोः श्रीशयोरहम् ।
वक्ष्ये गान्धर्वमुद्वाहं रुक्मिणीमङ्गलावि(भि) धम् ।।५।।

राजासीद्भीष्मनामाखिलरिपुभयदः कुण्डिनेशो विदर्भे
देशे वीरो महात्मा धनदजलपतीन्द्रादिभिर्लोकपालैः ।
तुल्यैश्वर्यः प्रजानां विधुरिव सुखदः सर्वशस्त्रास्त्रवेत्ता
ब्रह्मण्यः पुण्यशीलो निखिलनिगमवित् कृष्णसेवानुरक्तः ।।६।।

रुक्मी घोरोऽनुजो रुक्मरथ इति ततो रुक्मबाहुश्च रुक्म-
केशोऽथो रुक्ममाली विषयविषरताः पञ्चपुत्रास्तु तस्य ।
आसन् कृष्णद्विषो हृद्दमनपररतस्येन्द्रियाणीव दुष्टा-
स्तेषामासीत् स्वसान्त्या हरिहृदयगृहा रुक्मिणी श्रीरिवाब्धेः ।।७।।

दृष्ट्वा पुत्रीं मुखजितविधुं कञ्जनेत्रां किशोरीं
साक्षाल्लक्ष्मीं मृदुतरतनुं भीष्मकोऽचिन्तयद्वै ।
कन्यैषा मेऽखिलगुणवती दोषहीना सुश्रेष्ठा
कस्मै देयेति मनसि तदा नारदं द्राग्ददर्श ।।८।।

दृष्ट्वैव तं वेदविदां वरिष्ठं
मुनिं महाभागवतं नृपेन्द्रः ।
प्रणम्य पादौ शिरसा निवेश्य[1]
महासने नारदमादरेण ।।९।।

प्रक्षाल्य पादौ तदपः सभार्यो
राजा वहन् मूर्द्धनि गन्धमाल्यैः ।
प्रसाद्य नीराजनतश्च दिव्यै-
रन्नैरलं ब्रह्मसुतं ह्यभोजयत् ।।१०।।

---

१. मातृकायां 'निवेश्य' इति निरस्तीकृत्य 'न्यवेश्य' इति तदुपर्येव निर्मितं किन्तु अत्र निरस्तीकृतं रूपमेव उपयुक्तत्वात् प्रदत्तम् ।

विदर्भराजश्चरणौ स्पृशन्मुने-
रुवाच वाचं भगवन् जनैः फलम् ।
लब्धं मया दर्शनतस्तव प्रभो
करोमि किं स्वात्मरतस्य दीनधीः ।।११।।

ततःप्रसन्नो मुनिराशिषो ददौ
शत्रुक्षयो राज्यसमृद्धितास्तु ते ।
गोविप्रनारायणपादसेवने
बुद्धिर्हठा भीष्म नृपेन्द्र सद्यशः ।।१२।।

उवाच माता मुनये प्रणामं
कुर्वादरात्पुत्रि पदारविन्दम् ।
स्पृष्ट्वा स्वमूर्ध्ना जगदुत्तरं ते
पतिं प्रदास्यत्यतुलं मुनीशः ।।१३।।

श्रीकृष्णपादाम्वुजलीनमानस-
हंसा विदर्भेशसुताज्ञया प्रभोः ।
धात्र्या समं वन्दितुमाययौ मुनेः
पदारविन्दं यदुनाथकाम्यया ।।१४।।

ततो मुनेः सा समुपेत्य रुक्मिणी
ननाम पादौ कमला यथा भृगोः ।
मुनिस्तु तामात्मसमानरूपिणीं
दृष्टवा मुदातर्कयदात्मदेवताम् ।।१५।।

शचीश्वरीह्रीरतिवागरुन्धती
शकुन्तलाद्याः प्रतिमानतास्याः ।
अलौकिका मे त्विति भाति भीष्मजा
रमा परावियर्दुनाथशर्मणे ।।१६।।

इत्थं विचिन्त्याह मुनिर्हि भीष्मजां
कृष्णः पतिस्तेऽस्ति सुते रमेश्वरः ।
ब्रह्माद्वयानन्तपरात्मशब्दितः
सच्चित्परानन्दतनुर्हृदीश्वरः ।।१७।।

गोपो व्रजे क्रीडति योऽनिशं सखी-
जनैश्च गोपैर्व्रजराजनन्दनः ।
मनुष्यलीलो मथुरापुरे सदा
श्रीद्वारिकायां नृपतेर्हि लीलया ।।१८।।

भाद्रासिताष्टम्यजभेन्दुजे दिने
शनीन्दुभौमेन्दुजयुच्चगे वृषे ।
लग्ने तुलाहर्यलिगे कवीनक-
राहौ गुरौ लाभग अर्द्धरात्रके ।।१९।।

कारागृहे यो वसुदेवपत्न्यां
जातोऽरिशङ्खाब्जगदाढ्यबाहुः ।
पीताम्बरः कंकणरत्नमाला-
वृतं स काञ्च्यङ्गदनूपुराढ्यः ।।२०।।

ततो निशीथे रिपुराजतो भरं
भीतेन नीतो जनकेन गोकुलम् ।
तत्रावसन् श्रीव्रजराजमन्दिरे
लीलां स्वकीयां प्रकटी चकार यः ।।२१।।

कंसेरिता तत्र वकी जिघांसया
समागता हालहलाविलस्तना ।
वराङ्गनाङ्के विनिधाय बालकं
दत्वा स्तनं मुक्तिमवाप दुर्लभाम् ।।२२।।

प्रेङ्खस्थितो गोपकुमारकैर्वृतः
　　पदाब्जघाताच्छकटं न्यपातयत् ।
नन्दाङ्गणे बालविनोदमाचरन्
　　हृतस्तृणावर्तमृतिं चकार खे ।।२३।।

तस्यैकदा लालयती मुखं प्रसू-
　　र्लोकान् समस्तान् ददृशे विजृम्भतः ।
निमील्य नेत्रे मृगशावलोचना
　　सुतं हृदालिङ्ग्य तदास विस्मिता ।।२४।।

मधुपुर्यां वसुदेवो नत्वार्थयदादरान्मुनिं प्रेम्णा ।
　　सुतयोः कुरु संस्कारं गत्वा नन्द व्रजं भगवन् ।।२५।।

इत्थं पुरोधा वसुदेवनोदितो
　　द्विजातिसंस्कारविधिं बलेशयोः ।
कर्तुं व्रजे सायमुपागतोऽर्चितो
　　गोपैर्व्रजेशेन तदर्थमर्थितः ।।२६।।

दृष्ट्वाङ्के नन्दपत्न्याश्चपलतरशिशुं चञ्चलावर्णशुभ्रा-
　　भासं जीमूतकृष्णं मुनिरथपुलकस्वेदकम्पावृताङ्गः ।
मुञ्चन्नेत्राश्रुधारां शिथिल (शिथिलित) हृदयः स्तब्धवाक् भिन्नवर्णो
　　ब्रह्मानन्दे न्यमज्जत् सरिदिव जलधौ नामरूपे विहाय ।।२७।।

सूर्यानन्तप्रकाशः विधुशतसुभगः कोटिकामप्रकामः
　　सान्द्रानन्दामृताब्धी रुचिरघनतनुर्मोहजालस्य हन्ता ।
कोऽयं कस्मादुपेतो व्रजभुवि सबलं कृष्णमालोक्य गर्गो
　　वाणीमुक्त्वेति लीनः पुनरमृतनिधौ नामरूपे विहाय ।।२८।।

धैर्यं धृत्वाप्तबोधो व्रजपतितनयं नैकधा तर्कयत्किं
लावण्यस्वर्द्रुमाटव्यभिनवकुसुमं[1] किंदृगन्तर्भपुंजः ।
सद्रत्नार्चिः किमेका बहुसमयकृताहं मतेर्नाशकर्त्री
तत्त्वं वेदान्तवेद्यं किमथतनुभृतां प्रेमजन्मस्थलीयम् ॥२६॥

नन्देनोक्तो मम त्वं बुध कुरु सुतयोर्नामयुक्तं द्विजाति-
संस्कारं गुप्तमेवेति तदहमनयोः कर्तुमागां गृहान्तः ।
दृष्ट्वैवालौकिकाभो परमसुखनिधी नामरूपाद्विहीनो-
ऽहं जातोऽद्य ब्रुवे किं व्रजपतिमथ सौरिञ्च गत्वा स्वपुर्य्याम् ॥३०॥

मायातीताद्व्कर्माकृतिगुणवसतेः सच्चिदानन्दमूर्ते-
र्नाहं नामास्य ज्ञातुं प्रकृतिगुणमतिस्ते समर्थः सुतस्य ।
इत्थं ब्रूयां तदा मां रिपुभयचकितं वा वदेद्गोपराजः
साक्षाद्भूमौ पतित्वा प्रणतिमकरवं चेत्तदोन्मत्तमेव ॥३१॥

यदभासाभाति सूर्यानलविधुसहितं विश्वमन्तर्बहिर्यत्
पादौ ध्यात्वा मनोऽब्जे विधिशिवपुरुहूताद्यमीयुः सकामाः ।
निष्कामाः प्रेमभक्तिं जयजयवचनैर्वेदनीराजिताङ्घ्रि-
र्यःसोऽयं नन्दसूनुः कथमभवदहो नेत्रयोर्गोचरो मे ॥३२॥

यस्मादेषः परेशः प्रकृतिपरतरो ब्रह्मगूढः सरामः
स्वीयामाश्चर्यलीलां व्रजपतिभवने दर्शयन्नन्दसूनुः ।
आत्मीयानां सुखाय क्षितिभरदनुजान्नाशयन्कालशक्त्या
तस्मात्कुर्वे यथावच्छ्रुतिगदितमहं कर्म कृष्णस्य सर्वम् ॥३३॥

---

१. 'मस्मद्भाग्यामरद्रोर्वन' इत्येवं पाठोऽपि 'लावण्यस्वर्द्रुमाटव्यभि' इत्यस्य कृते विद्यते । अस्मिन् सन्दर्भे प्रथमचरणान्तस्य किमित्यस्य अनुस्वारः रेखया निरस्तीकृतः ।

एवं विचार्य स ऋषिरीशयो रामकृष्णयोः ।
संस्कारमकरोत् सर्वं स्वस्तिवाचनपूर्वकम् ।।३४।।

सूक्ष्मालकावृतमुखाब्जमनोहरश्रीः
शार्दूलदिव्यनखभूषितरत्नमालः ।
काञ्चीविराजितकटिर्वरनूपुराङ्घ्रि-
र्गोपीमनोहरति जानुकरैश्चलन् यः ।।३५।।

बद्धःकदाचित्स उलूखलेऽम्बया
न्यपातयत्तौ यमलार्जुनौ व्रजन् ।
सूर्येन्दुतारोदधिद्वीपसंयुतं
मृन्भक्षणे लोकमदर्शयन्मुखे ।।३६।।

नीलाम्बुदाभस्तडिदम्बरावृतो
वृन्दावने यः स्वसहृत्केलिभिः ।
वंशीनिनादैः सुखमर्पयत्यह-
न्याचारयन् वत्सकुलं सहाग्रजः ।।३७।।

वत्सेषु वत्साकृतिमागतं महा-
दैत्यं जिघांसेच्छुमपातयद्वने ।
कपित्थकानां चरणे प्रगृह्य तं
यो लीलया गोपशिशोः सुरार्चितः ।।३८।।

स चैकदा गोपकुमारकैः सहा-
क्रीडन् ययौ सूर्यसुतां स्ववत्सकान् ।
नीरं तटे पाययितुं द्विषं वकं
विदारयामास प्रगृह्य चञ्चुके ।।३९।।

वृन्दावनेऽतिरमणे भगवान् प्रभाते
क्रीडन् समं स्वसखिभिः शयुरूपदैत्यम् ।
गोवत्सपालगिलमाशु जघान कण्ठे
दृशा च निजवत्ससखीन् ररक्ष ।।४०।।

अचोरयद्वत्सपवत्सकान् विधि-
र्यदा तदा गोकुलवासिनां मुदे ।
विधेस्तु मोहाय बभूव वत्सरं
स्वयं यथावत्सखिवत्सरूपधृक् ।।४१।।

आशीविषं बहुसमैः कृतवासमर्क-
पुत्र्यां प्रसह्य भगवान् विमर्दं चकार ।
कृत्वा फणेषु नटनं सुखयन् स्वकीयान्
दावानलाद्व्रजमरक्षदसौ निशीथे ।।४२।।

कृत्वा वेषं विचित्रं सुललितमुरलीगायनाच्चारयन् गाः
हीं हीङ्कारांश्च कुर्वन् स्वरमरवनिताधैर्यमामोचयन् यः ।
हृष्टाः पुष्टाः सुतृप्ताः व्रजमिनदुहितुर्ह्यागमन् साद्वलोर्व्याः
क्रीडन् गोपालबालैः सुखयति सबलो गोपगोपीजनान् यः ।।४३।।

कंसेरितं गोपवपुर्धरं महा-
दैत्यं प्रलम्बं स्वजिघांसयागतम् ।
तुङ्गां समारोप्य बलं छलेन द्रा-
गाच्छन्तमेवाशु जघान तेन यः ।।४४।।

गोपात्मजैः कामनया फलस्य यः
सम्प्रार्थितो रामयुतो ययौ त्वरम् ।
लोकद्विषो रासभदैत्यकान् हरिः
हत्वाकरोत्तालवनं शुभं प्रभुः ।।४५।।

गोपीनामात्महेतोर्व्रजमिनदुहितुर्यादरात् कल्पकाले
कुर्वन्तीनां मनोऽर्थं निजवरणरतिं पूरयित्वाथ गत्वा ।
दीक्षाशालां स्वमित्रैर्निखिलभुवनराडन्नयाञ्चापदेशा-
त्तद्दारान्नं गृहीत्वा मखजनितमदं योऽहरद्ब्राह्मणानाम् ॥४६॥

शक्रं गर्वधराधिरूढमनसं लोकेश्वरं वायुभि-
र्नुन्नैर्वारिधरैः क्षणाल्लयकरैः स्थूलाश्मकीलालकम् ।
वर्षन्तं व्रजविप्लवाय रुषितं यागप्लवाघो हरिः
कृत्वागोद्धरणं स्वघोषसुखदो निर्मानमेवाकरोत् ॥४७॥

द्वादश्यां निशि पारणाय यमुनां स्नातुं प्रविष्टं बलाद्
भृत्यः पाशभृतोऽनयद्व्रजपतिं बध्वान्तिके स्वामिनः ।
तन्मोक्षाय गतं परेशमभयं गोपेशपुत्रं मुदा
दृष्ट्वा पाशधरोऽर्पयच्च पितरं सम्पूजयित्वा प्रभुम् ॥४८॥

ब्रह्मेशेन्द्रजयाभिमाननगसंरूढात्मभूमानहा
वृन्दारण्य पुरन्दरोऽग्र्यललनारत्नैः स्वगोपीजनैः ।
रात्राविन्दुमरीचिनष्टतमसि स्वर्ग्याङ्गना मोहयन्
रम्ये कल्पमहीरुहस्य निचये सूर्यात्मजाया[स्] तटे ॥४९॥

गोपीनां रासलीलाद्विषमसुरमहन्? शङ्खचूडं वने तन्-
मौलिस्थं रत्नमुख्यं झटिति बलकरे योऽर्पयत्पश्यतीनाम् ।
कंसादिष्टं ह्यरिष्टं व्रजसुखमसहं गोऽमरब्रह्मशत्रुं
सायं गोष्ठे जघान व्रजजनसुखदो गोकुलेशात्मजोऽजः ॥५०॥

अम्बावने नन्दपदग्रसं शयुं
निहत्य पादेन बलस्य पश्यतः ।
तस्माद्व्रजेशं तर्हि मुनीश्वर-
शापादरक्षद्भगवान्निशीथके ॥५१॥

गोवर्धनाद्रौ नृपचोररूपतः<br>
क्रीडारतान् गोपकुमारकान् बिले ।<br>
रुन्धन् हरन्व्योममहासुरो हतः<br>
कृष्णेन गोपा भयतोऽविता भरम् ।।५२।।

केशी तु कंसासुसमः समागतो<br>
जिघांसया श्वाकृतिरात्मनो व्रजे ।<br>
प्रातर्हतो नन्दसुतेन तन्मुखे<br>
दत्वा भुजं मृन्मयवाजिवत् क्षणात् ।।५३।।

नीतो ततोऽसो मथुरां स्वफल्कजा-<br>
क्रूरेण मित्रैर्विचरन् करेण यः ।<br>
कंसस्य भृत्यं रजकं महाशठं<br>
जघान तस्मादहरद्वराम्बरे ।।५४।।

तं सौचिकं यः समनुग्रहीतवान्<br>
मालाकृतं चेष्टवरेण सेवकम् ।<br>
चापं बभञ्जाशु महादृढं रिपो-<br>
स्तत्खण्डकेनैव जघान चासुरान् ।।५५।।

कृष्णो गोपैः स्वपुर्य्यां निखिलमणियुतस्वर्णहर्म्यान्वितायां<br>
पुम्भिः स्त्रीभिः समन्तात् सुनयनचषकैः पीयमानामृतास्यः ।<br>
गच्छन्नानन्दमूर्तिर्नृपपथि परिहासेन कुब्जां स्पृशन्य-<br>
श्चक्रे तूर्णं रमाङ्गीं सुवरमलयजालेपमात्रेण तुष्टः ।।५६।।

रङ्गद्वारि गतं मतङ्गजमरं हत्वा तथा हस्तिपान्<br>
रङ्गं योऽनुययौ क्षणेन हतवान् मल्लांश्च कंसं रिपुम् ।<br>
वन्दे तातपदं विमुक्तनिगडं वृष्णीन् मुदावर्द्धयद्<br>
गत्वावन्तिपुरं श्रुतीरधिगतः सान्दीपिनेः साङ्गकाः ।।५७।।

अधीत्य सर्वं गुरुदक्षिणार्थं
ययाच आनम्य पदं गुरोर्यः ।
गुरुस्तु पुत्रं जलधौ मृतं वै
सम्मन्त्र्य दारैः वरयाम्बभूव ॥५८॥

प्राप्तो वारिनिधेस्तटं जलधिना सम्प्रार्थितः पूजितो
हत्वा पञ्चजनासुरं जलचरं तद्देहजं कम्बुकम् ।
आदायाथ ययौ यमस्य नगरीं तेनादरार्चितो
नीत्वाचार्यसुतं न्यवेदयदसौ गुर्वर्हणार्थं प्रभुः ॥५६॥

श्रुत्वा स्वजामातृवधं जरासुतः
प्राप्तस्त्रयोविंशतिवाहिनीयुतः ।
पराजितः सप्तदशाजितोऽच्युतैः
बद्धो विमुक्तश्च बलेन वस्तवत् ॥६०॥

म्लेच्छैस्त्रिभिः कोटिभिराययौ पुरीं
श्रुत्वाजिवीरं यवनो मृधे[च्छ]या ।
भस्मीकृतः सो[1] मुचुकुन्दलोचन-
स्थितेन कृष्णेन शिवेन कामवत् ॥६१॥

मुक्ता स्वर्णेन्द्रनीलस्फटिकमरकतारक्तरत्नप्रवाल-
वैदूर्यैर्हर्म्यलक्षैर्नवभिरधिपतीनां युतां द्वारिकां यः ।
स्वशिल्पाश्चर्यदां स्वां जलनिधिसलिलेऽदर्शयद्यादवेभ्यः
सस्ते[2]त्रैलोक्यनाथो भवति पतिरलं तं भजस्वादरेण ॥६२॥

---

१. "सो मुचुकुन्द" ।

२. सस्तेइत्यपाणिनीयौ प्रयोगौ । इतादृक्प्रयोगचिन्तनम् भूमिकायां सन्धिप्रयोग-प्रसङ्गे अवलोकनीयम् ।

हित्वान्यचिन्तां दुरिताब्धिदायिनीं
तमेव चित्ते विनिधाय चिन्तय ।
गायाशु तस्यैव गुणान् मनोज्ञान्
भजस्व कायेन तमेव सत्पतिम् ।।६२।।

।। इति श्रीकान्हजीभट्टात्मजबालमुकुन्दभट्टविरचिते
रुक्मिणीमङ्गले प्रथमः सर्गः ।।

## ॥ द्वितीयः सर्गः ॥

—:०:—

इत्थं मुनेर्नन्दकिशोरलीलाः
श्रुत्वैव पादौ प्रणनाम मूर्ध्ना ।
हृदा ययौ कृष्णपदारविन्दं
गङ्गेव सिन्धुं परिपूर्णवेगा ॥१॥[1]

दृष्ट्वा मुनीशः स्रवदश्रुधारां
द्रवद्धृदं गद्गदभारतीं माम् ।
आनन्दमग्नामनुमन्त्र्य भैष्मीं
ययौ विदर्भाधिपपूजितोऽरम् ॥२॥

ततो मुनिः कृष्णपदाब्जदर्शनो-
त्सुको ययौ द्वारवतीं मनोहराम् ।
सर्वर्तुपुष्पादिसमृद्धिमद्द्रुमै-
राह्वानयन्तीं भवभीतकान् खगैः ॥३॥

दिव्यां समुद्रपरिखां मणिरुक्मगेहां
ब्रह्मेशशक्रवरुणान्तकवित्तनाथैः ।
द्वारस्थितैर्बलिकरैरभिपूजितां तां
वैकुण्ठतोऽतिरमणां सकलर्द्धियुक्ताम् ॥४॥

---

१. श्रुत्वा मुकुन्दस्य दयापराक्रमौदार्यक्षमाशीलबलादिसद्गुणान् रूपं च चक्षुःफलमामनोहरं मेनेऽनुरूपं हरिमात्मनःपतिम् ॥२॥ श्रृंछ इति श्लोकः प्रथमश्लोकस्य ॥१॥ संख्यापार्श्वे √ इत्याकारं चिह्नं प्रयुज्य उपरि पत्रप्रान्ते लिखितः । श्रृंछ-इत्यस्याभिप्रायो मातृकायाः पष्ठपङ्क्तावस्य स्थलमिति निर्दिशति । तथाप्ययं तृतीयसर्गे तत्सर्गस्य द्वितीयश्लोकरूपेण मिलति ।

प्रोत्फुल्लकञ्जसरसीं शुककेकिभृङ्ग
हंसादिशब्दहृदयां भुवनैकरम्याम् ।
लोकोत्तरां निखिलभाग्यचयैकलभ्यां
तां द्वारिकां समवलोक्य मुदं ययौ सः ।।५।।

तस्यां हरेर्भवनमिन्दुसहस्रशोऽर्चि-
र्विप्रोऽवलोक्य परमां मुदमाप चाथ ।
तस्मिन् ददर्श हृदयेशमतीव रम्य-
शृङ्गासनस्थमभवं यदुनाथमिष्टम् ।।६।।

सच्चिद्घनं विधिशिवादिभिरात्मकामै-
र्ध्येयाब्जपादमखिलेश्वरमात्मनाथम् ।
आनन्दमूर्तिमवलोक्य बभूव लीन
आनन्दसिन्धुनिकरे स च नारदोऽरम् ।।७।।

तं नारदं द्विजवरं ह्यवलोक्य दूरा-
दुत्थाय यादवकुलैः शिरसा ननाम ।
संवेश्य रत्नकनकासन आदरेण
सम्पूज्य सज्जनपतिः शमपृच्छदाशु ।।८।।

दृष्ट्वा त्वदागमनमद्य फलं जनेर्नो
जातं त्वदङ्घ्रितलसेवनतोऽङ्घ्रिवारा ।
तीर्थीकृतं ममगृहं भगवन् कुतो वा
आगम्यतेऽत्र वद मां हरिरित्युवाच ।।९।।

आत्मोक्तमार्गमवितुं चरतः सतां वै
धर्मं हरेर्वचनमात्मगुरोः परस्य ।
श्रुत्वाह नारदमुनिर्निजनाथदेवं
प्राप्तोऽत्र कुण्डिनपुरादहमाशु कृष्ण ।।१०।।

दृष्ट्वा विदर्भनृपतेर्दुहितां मृगाक्षीं
बिम्बोष्ठकुन्दरदनां मृदुचारुदेहाम् ।
अङ्कोहितेन्दुवदनां शुभशीलरूपौ-
दार्याङ्कबुद्धिनिलयां भुवनोत्तराङ्गीम् ।।११।।

मेने तव प्रियतमां कमलां नृलोके
जातां सुलक्षणयुतां खलु रुक्मिणीं ताम् ।
अत्रागतः कथयितुं रमया विवाहं
कुर्वीश चेति वितरन् शुभमात्मकेभ्यः ।।१२।।

ह्लोवाच्छतद्रुतिशकुन्तलिकाम्बिकेन्द्र-
पत्नीव शिष्टदयिता शतरूपकाद्याः ।
भैष्मीमुखं मम विलोकयतः कुरूपा-
भान्ति ब्रुवे किमधुना बत तच्छ्रियं ते ।।१३।।

श्रीनारदस्य वचसा कमलां विदर्भ-
राजेन्द्रजां स्वसदृशीमवगम्य कृष्णः ।
तां वोढुमाशु विदधे हृदयं तदाज्ञां
सम्प्राप्य नारदमुनिस्तु जगाम लोकम् ।।१४।।

।। इति श्रीकान्हजीभट्टात्मजबालमुकुन्दभट्टेन विरचिते
रुक्मिणीमङ्गलाख्ये काव्ये द्वितीयः सर्गः ।।

## ॥ तृतीयः सर्गः ॥

—:०:—

भैष्मी तदारभ्य यदूत्तमाप्तये
जग्राह श्रीभागवतान् व्रतान् हृदा ।
त्यक्त्वान्यभोगान् सलिलानि चातकः
स्वात्यम्बुलब्ध्यै पवनादनं यथा ॥१॥

श्रुत्वा मुकुन्दस्य दयापराक्रमौ-
दार्यक्षमाशीलबलादिसद्‌गुणान् ।
रूपं च चक्षुःफलमामनोहरं
मेनेऽनुरूपं हरिमात्मनः पतिम् ॥२॥

वाचा हरेर्नाम्नि रताभवत्सदा
कायेन सा कृष्णपदाब्जसेवने ।
गृहान्तरे द्रष्टुम[ल]क्षिते स्थिता
प्रियस्य नामानि रटन्त्यहर्निशम् ॥३॥

प्रातः समुत्थाय च कृष्णमानसा
कृष्णार्चनं सन्दधती विधानतः ।
आनन्दमग्ना हृदि कृष्णलाभतः
पूजां विसस्मार क्वचित्कृतां रता ॥४॥

रताभवद्वैष्णवविष्णुशास्त्रयोः
श्रीमत्तुलस्यां हरिपादसेवने ।
गङ्गेनकन्यादिनदीषु वैष्णव-
व्रते च कृष्णैकफलस्य वाञ्छया ॥५॥

विद्युद्घनं चन्द्रमृगेन्द्रनीलक-
नीलाब्जभृङ्गानवलोक्य दूरतः ।
सम्पूजयामास सदेष्टविग्रहो-
पाङ्गोपमेयान् कविभिर्हि भीष्मजा ॥६॥

प्रसन्नचित्ता विचरत्यहर्निशं
श्रीकृष्णपादार्चनकर्मणि द्रुतम् ।
निधाय कृष्णं हृदि कृष्णवाससा
सुसंवृता कृष्णकचावृतानना ॥७॥

सुकृष्णशङ्गा मणिकृष्णभूषणा
मनोज्ञकृष्णास्तरणा सुकृष्णदृक् ।
कृष्णान् पदार्थाननुरागसंयुता
विलोकयन्ती फलदर्पणादिकान् ॥८॥

श्रीकृष्णमेवानुरटत्यहर्निशं
भैष्मी यथा चातक इष्टवारिदम् ।
सर्वेन्द्रियैः कृष्णपदाब्जसेवना-
दात्मार्पणं सा हरयेऽकरोत् सती ॥९॥

कुमारिकां तामवलोक्य भ्रातरो
माता पितान्ये च सुहृत्पुरोधसः ।
विवाहयोग्यां नरलोकदुर्लभां
विमोहितास्ते ह्यभवन् कृपायुताः ॥१०॥

कोटीनभां कोटिविधूल्लसन्मुखीं
वरांगकान्त्या कमलात्रपाप्रदाम् ।
सुखाब्धिरूपां रतिकोटिमङ्गलां
गुणेन शीलेन ह्रियात्मतुल्याम् ॥११॥

विचारयामासुरधीशपुत्रं
स्वाचारशीलेन गुणेन युक्तम् ।
तस्याः विवाहार्थमिमे समेत्य
प्रापुर्न भैष्मीगुणरूपतुल्यम् ।।१२।।

माताब्रवीत्तान् दुहितुर्विवाह-
चिन्तायुतानात्मसुतासमानम् ।
पतिं रमेशं मुनिनारदेन
दिष्टं सदःस्थान् परिहर्षयन्ती ।।१३।।

चिन्ता न कार्या दुहितुर्वरस्या-
लाभाद्धि कन्यावर ईप्सितोऽस्ति ।
श्रीद्वारिकायां वसुदेवपुत्रः
पुरैव श्रीनारददिष्ट ईड्यः ।।१४।।

श्रुत्वैव राज्ञा वचनं पुरोधसो
राजा तथान्ये च सुहृद्गणादयः ।
प्रहर्षिताः साध्विति वाक्यमूचिरे
मेघध्वनिं श्रुत्य यथा शिखीवलाः ।।१५।।

तदैव भीष्मः समुवाच मन्त्रिणं
राधे शुभे मासि सिताष्टमीदिने ।
वैवाहिकं लग्नमतीव सुन्दरं
श्रीवासुदेवाय ददामि रुक्मिणीम् ।।१६।।

अद्यैव वैवाहिकसत्फलादिका-
न्यादाय गच्छन्तु पुरोहितादयः ।
द्वारावतीं ते वरयन्तु रुक्मिणी-
पाणिग्रहार्थं वसुदेवनन्दनम् ।।१७।।

तत्साधुवादश्रवणेन दग्ध-
मुखो यथार्कद्रुम इष्टवृष्ट्या ।
रुक्मी बली कृष्णद्विडाह रुष्टः
कृष्णस्य रोषात् परिभावणं वै ।।१८।।

स्वसा मदीया पशुपालकस्य
धर्मादपेतस्य कुलाधमस्य ।
वैदर्भदेशेन्द्रसुता न योग्या
यथान्नमैन्द्रं शुनकस्य विप्राः ।।१९।।

योऽचोरयद्गोकुलवासिनां गृहे
गृहे धृतं दुग्धदधीनि नित्यशः ।
बद्धोऽपि रुद्धोऽपि च तैर्न तज्जहौ (तज्जहौ नहि)
कथं स राजेन्द्रकुमारिकापतिः ।।२०।।

योऽचारयद्गा व्रजवासिनां सुतै-
र्वने वने गैरिकचित्रितस्तनुः ।
शिखण्डिगुञ्जावनपुष्पभूषितः
कथं स राजेन्द्रसुतापतिर्भवेत् ।।२१।।

तक्रादिकेनैव बभार देहं
गोपीभिरात्तेन गृहे गहे यः ।
ममेन्द्रतुल्यस्य स्वसा कथं तद्
योग्या त्रयीवावरवर्णजातेः ।।२२।।

कथं परब्रह्मपरेशमात्मना-
मात्मेति चेत् सो दृग्गोचरः सदा ।
अष्टाङ्गयोगैर्हृदि ध्येयपादो
व्योमेव सर्वत्र समन्वितो विभुः ।।२३।।

न ब्रह्मणो ज्ञातिकुलं न भार्या
न मित्रशत्रू न च जन्ममृत्यू ।
न बान्धवा नैव पिता न माता
तस्मान्मृषा वागिति कृष्ण आत्मा ।।२४।।

कृष्णः परेशः क्षितिभारनुत्तये
जातो विधिप्रार्थनया यदोः कुले ।
इत्युच्यते तर्हि तदेव ब्रह्म
ध्येयं भवद्भिर्नहि देवकीसुतः ।।२५।।

भोक्ता च भोग्यश्च फलं च सर्वं
व्याप्यं तथा व्यापकरूपमत्र ।
ब्रह्मैकमेवाद्वयमस्ति सच्चि -
दानन्दरूपोऽखिलवेदगीतः ।।२६।।

अधीधरद्गोमयपिण्डभूतं
गोवर्द्धनं तेन किमेष ईशः ।
किं वा जघान स्त्रियमात्ममातृ-
रूपां वकीं वत्समसौ वृषं वा ।।२७।।

पलायितो वाजिमुखे जरासुता-
त्तेनायमीशः किमु मातुलस्य ।
घाताद्व्रजे वाधिकनृत्यगाना-
द्वक्तव्य ईशः कथमात्मशत्रुः ।।२८।।

दिनद्वयादाप्तसमृद्धयो नृपा-
सनं गताः पूर्वनृपा न यादवाः ।
नयादपेता नहि नः कुलेन ते
तुल्याः कथं वो दृशि यौनयोग्यकाः ।।२९।।

सुवर्णवैदूर्यसुवज्रभित्तिका
सुवर्णशालोदधिमध्यगा पुरी ।
यस्यास्ति हर्म्यैर्बहुलक्षकैर्युता
सुवर्णनारीपुरुषैः सुसङ्कुला ।।३०।।

ब्रह्मेशशक्रान्तकपाशभृद्धना-
ध्यक्षादिभिः सेवितचत्वरा सभा ।
श्यामैककर्णा हरयो मुकुन्दक-
कुन्दौ महापद्मकपद्मनीलकाः ।।३१।।

शङ्खश्च खर्वो मकरश्च कच्छपः
कृष्णस्य किं तेन भवेत् क्षियाता ।
ययातिना शप्तकुलस्य भूमिपै-
र्बहिः कृतस्याधमकर्मिणो वराः ।।३२।।

सम्प्राप्य सम्पत्तिमधर्मतो वरां
विमोहितो रङ्ककुलः सरामकः ।
राजत्वहीनोऽखिलमित्रनाशकः
कृष्णो न योग्यो दुहितुः पतिस्तव ।।३३।।

तस्मान्नृपाणाम्मुकुटः कुलस्य
परम्पराप्राप्तनृपत्व एषः ।
चेदेः कुमारः शिशुपालनामा
योग्यः पतिर्मे स्वसुरात्मतुल्यः ।।३४।।

शक्रादयो यत्परितापिता ययुः
कृष्णं स कृष्णोऽपि जितो जरासुतात् ।
भेजेऽतिदुर्गं शरणं समागधो
वशेऽस्ति तस्मै भगिनीं ददाम्यहम् ।।३५।।

ततस्तु रुक्मी वचनं स्वपित्रो-
बलेन भङ्क्त्वा स्वयमेव पत्रम् ।
मूढोऽभिमानात्पितरौ द्विजांश्चा-
नादृत्य रोषान्धदृशिर्लिलेख ।।३६।।

विवाहलग्नं त्वयमूर्ज्जशुक्ल-
पक्षे कवौ विष्णुदिनेऽर्द्धरात्रे ।
स्वसुर्लिखित्वा परिशोध्यमित्रै-
श्चैद्याय सम्प्रेषयति स्म घोरः ।।३७।।

तल्लग्नदोषानविचार्य चाग्रहा-
च्चैद्याहितान् भ्रातुरनिष्टदान्भरम् ।
पित्रोर्हितान् बन्धुगणस्य रुक्मिणी-
सुखप्रदानेव गुणान्विचार्य सः ।।३८।।

रथाश्वहस्तीनसिचर्मभूषणो-
त्तमांस्तथा श्रीफलकुङ्कुमाक्षतम् ।
सुवर्णमुद्रायुतमंशुकानि च
फलप्रदानार्थमनोदयद्द्रुतम् ।।३९।।

आरुह्य वाहं सकलं गृहीत्वा
भो विप्र भो मागध चेदिपुर्याम् ।
गत्वा कुमारं चिदिपस्य पृष्ट्वा
सौख्यं वरध्वं भगिनीवराय ।।४०।।

कृष्णेन सिद्धं स्वस्वसुर्विवाह-
मपास्य कृत्वा चिदिपात्मजेन ।
धनं ददौ याचकवृन्दकेभ्यो
हर्षाच्च रुक्मी स्वजनाय भागम् ।।४१।।

धनं गृहीत्वा ह्यवदन् पुरोधसो-
ऽष्टमीदिने तैलमभीष्टदं बहु ।
भैष्म्याः कुरु त्वं कुलदेवतार्चनं
सुमण्डपाच्छादनपूर्वकं नृप ।।४२।।

।। इति श्रीकान्हजीभट्टात्मजबालमुकुन्दभट्टविरचिते
रुक्मिणीमङ्गलकाव्ये तृतीयः सर्गः ।।

## ॥ चतुर्थः सर्गः ॥

—:०:—

ज्ञात्वा भ्रातुरनीतिमात्मनयनं चैद्याय भैष्मी प्लुता
दुःखाब्धौ हृदयज्वरश्वसनतः शुष्कास्यपद्माश्रुदृक् ।
कृष्णस्तेऽस्ति पतिर्हि नारदमुनेर्वाक्यामृतासिञ्चिता
प्राणत्यागमभीप्सती नहि समर्थाभूद्धरिं ध्यायती ॥१॥

रुक्मिण्या हृदयेऽभवत्सुमहती चिन्ता कथं श्रीपति-
र्दुःखाब्धिं प्रलयन्मनो नयनयोरानन्दमुल्लासयन् ।
आत्मद्वेषिमुखश्रियं रविरिव ध्वान्तं हरन्मे हरि-
र्गृह्णीयात्करमाशु यादवपतिर्दीनैकबन्धुः प्रभुः ॥२॥

भो गोपीजनवल्लभाच्युत हरे दीनैकबन्धो प्रभो
पूर्णानन्द दयाकरानलस हे मां विद्धि चेटीं निजाम् ।
नाहं जातु चिदेगृहे स्वसहजैर्दत्ता गमिष्येऽसिना
भङ्क्त्वा कुक्षिमथो मरिष्य अथवा भुङ्क्त्वा विषं दुर्द्धरम् ॥३॥

वृकावृतेणीव भयाकुला सती
शुशोच सेत्थं हरिदर्शनेच्छया ।
क प्रेषये द्वारवतीश्वरं प्रति
पत्रं लिखित्वा हरमद्य संङ्कटे ॥४॥

पश्ये न दूतं कमपीष्टदं द्रुतं
गत्वा च यो द्वारवतीश्वरं प्रति ।
उक्त्वाखिलं वृत्तमिहानयेत्पतिं
ममेति शोचत्यथ सुप्तिमाप सा ॥५॥

स्वप्ने ददर्शाथ सवत्सगा मुनीन्
गर्गादिकान् सा समपृच्छदात्मनः ।
कृष्णं पतिं ते जगदुर्हरिष्यति
त्वां वासुदेवो गिरिजागृहे द्रुतम् ॥६॥

आकशवाचोऽप्यभवन्निशान्ते
चिन्ता न कार्या भवतीभिरित्थम् ।
भ्रातुर्हठाद्दुष्टदमं विधाय
हरिष्यति त्वां हरिरेव भैष्मि ॥७॥

तदैव निद्रान्तमवाप भीष्मजा
किंचित्प्रसन्ना स्वसखीमुवाच सा ।
स्वप्नं तदाश्रुत्य सखी समादिशत्
सुखप्रदं त्वं समवैहि चैतत् ॥८॥

ततो जगौ कृष्णपदाब्जदर्शनो-
त्सुका स्रवन्नेत्रजला हि रुक्मिणी ।
कृष्णं दयासिन्धुमसुप्रियं निज-
पतिं स्मरन्ती हृदि गद्गदस्वरा ॥९॥

अलकावलीवृतचारुकञ्जमुखं सुनीरदसुन्दरं
तडिदम्बरं जलजाक्षमम्बुजनाभमब्जकराङ्घ्रिकम् ।
अरुणाधरोष्ठमुदारनासमह्रस्वकर्णकचं हरिं
पुरुषार्थसिन्धुमहं कदा ह्यवलोकये करुणानिधिम् ॥१०॥

अवितः कयाधुसुतो दितेस्तनयान्नृसिंहवपुर्धृता
प्रलयाच्च सत्यव्रतो द्रुतं झषरूपिणा कनकाचलः ।
मथने धृतः कमठेन शूकररूपिणा ह्यचलोद्धृता
जनकात्मजा दशवक्त्रतो रघुनाथरूपधरेण वै ॥११॥

—४—

नरकार्तिलिप्सुरधीशकः क्षयितो भृगूद्वहरूपिणा
वटुवामनाकृतिनावितो सुरसङ्गतो बलिरात्मना ।
हलधारिणा वसुधाविता नृपवेषदैत्यविनाशना-
त्त्रिदिवोऽवितो जिनरूपिणा दमितः कलिःकलरूपिणा ।।१२।।

द्रुपदात्मजा ह्यविता च येन गजोऽवितो हरिरूपिणा
व्रजबालिका मणिचूडतो व्रजबालका मयपुत्रतः ।
पितरौ च कंसनिसूदनेन यथावितावरिमीलितः
स हि दीनबन्धुरजेशवन्दितपादिहावतु मां प्रभुः ।।१३।।

वसुदेवनन्दन देहि दर्शनमच्युताघहर प्रभो
वनिताऽहमात्मसहोदरेण करीव नक्रवरेण वै
पतितास्मि दुःखजलाम्बुधौ निजदासिकेति विचार्य मां
सहसोद्धराब्जकरेण गोकुलनाथ दीनदयानिधे ।।१४।।

तदैव कञ्चिद्द्विजवर्यमागतं
विलोक्य सोत्थाय ननाम मौलिना ।
अपावृतं द्वारमिवेष्टकार्यसं-
सिद्धेस्तमानर्च रहो स्मिता सती ।।१५।।

तुष्टाव विप्रं विनता स्थिताग्रतः
सदासनस्थं ज्वलनं यथेष्टिदम् ।
त्वं सद्गुरुः कृष्णपदाब्जदो जग-
द्बन्धुः स्वसारं समवैहि मां निजाम् ।।१६।।

स्तुतो द्विजाग्रो विकलां निरीक्ष्य
भैष्मीमुवाचेदमहो स्वसस्ते ।
व्यथा किमस्तीत्यखिलं मदग्रे
त्वं ब्रूहि तूर्णं सुखितां करोमि ।।१७।।

श्रुत्वा द्विजोक्तिं समुवाच भीष्मजा
खेदस्य हेतुं स्वसहोदरैः कृतम् ।
श्रीकृष्णपादाम्बुजसेवनात्मक-
मनोऽर्थभङ्गं निजहृद्विदारकम् ।।१८।।

उक्त्वाखिलं वृत्तमशेषमात्मनः
कृष्णात्तधीस्तं प्रणिपत्य मौलिना ।
अमांसला ह्यश्रुमुखी हृदातुरा
सुयोगिनं विप्रमुवाच भीष्मजा ।।१९।।

विज्ञप्तिमेकां श्रृणु विप्र ते पदं
नमाम्यहं द्वारवतीं व्रजाश्विदम् ।
वृत्तं मदीयं वसुदेवनन्दन-
श्रोत्रे वदित्वा समये समानय ।।२०।।

दास्यामि तेऽहं बहुदक्षिणां प्रभो
कृष्णेन मद्योगमिहाशु कारय ।
दुःखार्णवादुद्धर मां बलानुजं
पारं प्रदर्श्यैव सृतेः सुखप्रदम् ।।२१।।

कृपालुना विश्वसृजा त्वमद्य
सन्दर्शितो नाविकवत्प्लुतायाः ।
दुःखार्णवे मे कथमन्यथा स्यात्
त्वद्दर्शनं दुःखहरं हरिप्रदम् ।।२२।।

श्रुत्वैव मां दीनदयालुरीश्वरः
समं त्वयागत्य पितुः पुरं मम ।
हस्तं गृहीत्वा स्वपुरं नयिष्यति-
बलेन दुष्टेषु दमं विधाय सः ।।२३।।

श्रुत्वैव भैष्म्याः वचनं द्विजोत्तमः
सम्प्राप्य हर्षं समुवाच रुक्मिणीम् ।
पत्रं लिखित्वाशु करेऽर्पयाद्य मे
यास्याम्यहं द्वारवतीं समीरवत् ॥२४॥

त्वं मे स्वसाहं तव वै सहोदरो
धर्मस्य तस्मादहमानये तव ।
पतिं विवाहावसरे स्वसस्त्वया
चिन्ता न कार्या शपथं करोमि ते ॥२५॥

ततस्तु भैष्मी द्विजवर्य वाक्यतो
विश्वासमागत्य लिलेख पत्रकम् ।
स्वस्वामिनो द्वारवतीश्वरस्य हृ-
दाकर्षकं रज्जुमिवातिहार्दतः ॥२६॥

पत्रं समालिख्य दृगश्रुसिक्तं
स्वनाममुद्राङ्कितमाविधाय ।
भैष्मी ददौ विप्रकरेऽथवाच-
मुवाच विप्रं प्रति गद्गदागीः ॥२७॥

विवाहघस्रान्तमहं तु हार-
मालोकयिष्याम्ययनं द्विजेन्द्र ।
तस्मिन्न द्रक्ष्ये यदि कृष्णमीशं
समुत्सृजिष्यामि तदैव चासून् ॥२८॥

तथेति कृत्वाप्तवरः स्ववाससा
बद्ध्वा कटिं स स्थविरोऽपि मूर्द्धनि ।
निधाय पत्रीं हृदि कृष्णमीश्वरं
युवेव सोऽभूद्बलवीर्यवान् सः ॥२९॥

श्रीद्वारिकामार्गमसौ गृहीतवान्
समीरवेगोऽति बली द्विजोत्तमः ।
मार्गे सवत्सां कपिलां दधि द्विजो-
त्तमांश्च पश्यन् शकुनं शुभप्रदम् ।।३०।।

।। इति श्रीद्राविडकान्हजीभट्टात्मजबालमुकुन्दभट्टविरचिते
रुक्मिणीमङ्गलाख्ये काव्ये चतुर्थः सर्गः ।।

## ॥ पञ्चमः सर्गः ॥

—:०:—

श्रीद्वारिकां तामगमद्द्विजाप्तः
समुद्रखातां मणिहेमसालाम् ।
रमालयां पद्मनिभामजेश-
शेषादिभृङ्गैरभितः स्तुतां सः ॥१॥

प्रफुल्लरक्ताब्जमिवाजशेष-
शम्भ्वादिभृङ्गैः समभिस्तुतां वै ।
वन्याभिरादित्यमहीरुहाणां
पत्रैः प्रसूनैश्च फलैर्नतानाम् ।
प्रोत्फुल्लवल्लीसमवेष्टितानां
मनोरमां भृङ्गसमाकुलानाम् ॥२॥

प्रोत्फुल्लसौगन्धिकहल्लकेन्दी-
वरोत्पलाब्जावृतजीवनाभिः ।
तरङ्गिणीभिर्मणिबालुकाभि-
हंसालिचक्राह्वरवाभिराढ्याम् ॥३॥

वापीभिरच्छामृतजीवनाभिः
प्रवालकूलाभिरलङ्कृताभिः ।
पद्मैः सुरक्तैरसितासितैश्च
सोपानकैः स्वर्णहरिन्मणीनाम् ॥४॥

नित्योत्सवां कनकदण्डवरध्वजाभिः
संवारितातपसृतिं भुवनोत्तरां ताम् ।
दिव्याबलापुरुषरत्नयुतां नृपाध्व-
वीथीविभक्तपदवीशरणां नृलोके ।।५।।

हर्म्यैः सुवर्णकलशैर्मणिभित्तिभिश्च
शालासभाभिरभितो रुचिरां समृद्ध्या ।
पूर्णां रथाश्वकरिसङ्कुलराजमार्गां
द्वारावतीं समवलोक्य मुदं ययौ सः ।।६।।

द्वारं समेत्य सदसः स उवाच तूर्णं
पालांस्तु कुण्डिनपुरादहमागतोऽस्मि ।
कृष्णाय वेदयत मां शिवनामविप्रं
कार्थिनं (श्रुतवार्थिनं) ह्यतिभरं ययुरीश्वरं ते ।।७।।

शनैस्त ऊचुः शिवनामविप्रः
प्राप्तः कृपालो तव दर्शनार्थम् ।
श्रुत्वेति वाक्यं हरिराह तान् वै
समानयध्वं द्विजवर्यमाशु ।।८।।

श्रुत्वा मुकुन्दस्य शुभां गिरं ते
द्वास्थाः शिवं विप्रवरं समूचुः ।
आगच्छ भो विप्र गृहे रमेशं
पश्याद्य नेत्रे सफली कुरु त्वम् ।।९।।

तस्यां हरेर्भवनमेत्य विशन् द्विजाग्र-
श्चित्रार्पितस्तनुरिवाभवदात्मनाथम् ।
आनन्दसिन्धुमखिलेशमशेषशोभा-
धिष्ण्यं विलोक्य वसुदेवसुतं प्रमोदात् ।।१०।।

सच्चिद्‌घनं घनघनाकृतिमात्मभूनां
सम्मोहनं कनकवाससमच्युतं तम् ।
सद्रत्नहाटकमयासनमुष्णरश्मि-
स्थैरावतीवृतघनाभमपश्यदारात् ।।११।।

लोकोत्तरैर्यदुवरैस्तमुपोपविष्टैः
संराजमानममरेन्द्रसभोत्तमायाम् ।
कृष्णं स्वकीयसदसीन्दुमिवोडुभिः खे
संस्तूयमानमजशर्वधनेशशक्रैः ।।१२।।

वारीशवायुयमवह्निभिरादरेण
दूरस्थितैर्बलिकरैरवलोक्यमानम् ।
हस्त्यश्वपत्तिरथसङ्कुलचत्वरायां
पश्यन् हरिं द्विजवरो न च तृप्तिमाप ।।१३।।

स्वेदाढ्यदेहमवलोक्यमुहुः सुदीर्घान्
श्वासान् सृजन्तमिह दूरत आगतं तम् ।
विप्रं चरं निखिलधर्मभृतां पतिर्द्रा-
गुत्थाय तैर्यदुवरैः प्रणनाम मूर्ध्ना ।।१४।।

सिंहासनस्थितबुधोत्तमपादयुग्मं
प्रक्षाल्य शीतलजलेन करेण वारि ।
मौलौ दधत् स्वयमपूजयदादरेण
कर्पूरचन्दनवरोत्तममाल्यकैस्तम् ।।१५।।

अभोजयत्तं द्विजवर्यमन्नै-
र्भक्ष्यैश्च भोज्यैर्बहुलेह्य चोष्यैः ।
हरिःशयानस्य बुधोत्तमस्य
पादावपीडं स्वकरैश्चकार ।।१६।।

विश्रान्तमेवं द्विजवर्यमादरात्-
पप्रच्छ कृष्णो भगवन् फलं हि ।
जनेर्मया प्राप्तमहो त्वदीय-
सन्दर्शनात्तीर्थमभूद्गृहं मे ॥१७॥

यद्यप्यागमनं तव द्विजवरानन्दाय लोकस्य वै
पृच्छेऽथापि यदर्थमत्र जलधिं तीर्त्वागतस्त्वं प्रभो ।
किं स्वस्त्यस्ति नृपाद्धि यस्य विषये संपाल्यमानाः प्रजाः
क्षेमं यान्ति स मे प्रियोऽस्ति नृपतिर्नैवान्यथा तोषकृत् ॥१८॥

कश्चित्ते द्विजवर्य तुष्टमनसो वर्तेत कृच्छ्रेण न
धर्मो वृद्धसुसम्मतो यदि भवेत्तुष्टः सदा ब्राह्मणः ।
यत्केनाल्प (त्म्य) महीयमान इति स्वं धर्मं सविप्रो भवे-
ल्लोकस्याखिलकामधुक् ददति ते धर्मा द्विजस्यार्थितम् ॥१९॥

सन्तोषाद्रहितः शचीपतिरपि क्लिष्टः सदा वर्तते
तुष्टोऽकिञ्चनकोऽपि तापरहितः शेते सदा विज्वरः ।
विप्रान् भूतसुहृत्तमान् सुनिरहङ्कारान् सुसाधूनहं
शान्तानात्मपदाप्तितुष्टमनसो वन्देऽसकृन्मौलिना ॥२०॥

कश्चित्ते(कच्चित्ते) कुशलं द्विजाग्र्य नृपतेर्यस्य प्रजाःपालिता
देशे शं निवसन्ति वै स नृपतिः प्रेयान्ममातो यतः ।
तीर्त्वा दुर्गमिहागतो यदिहया[1] सर्वं ह्यगुह्यं यदा
ब्रूहि त्वं करवाम विप्र सकलं कार्यं तवासंशयम् ॥२१॥

---

१. छन्दोऽनुरोधाद् 'ईहया' शब्दोऽत्र 'इहया' इति रूपेण प्रयुक्तः ।

एवं सः परमेष्ठिना भगवता लीलानराङ्गेन सं-
पृष्टो वृत्तमवर्णयद् द्विजवरो भीष्मात्मजायाः शुभम् ।
कृष्णायाथ निवेद्य[1]द्रहसि या दत्ता लिखित्वा तया
प्रेमाङ्काङ्कितपत्रिकां प्रियकरीमुन्मुच्य मुद्रां चरः ॥२२॥

दृष्ट्वैव प्रियपत्रिकां प्रियतया ह्याकर्षणीं स्वात्मनः
प्रेमाब्बिन्दुनिषिक्तवर्णरुचिरां तां वाचितुं नाशकत् ।
कृष्णोऽथ द्विजवर्यमाह भगवंस्त्वं श्रावयेमां शुभां
पत्रीं चित्तहरीं ममस्खलितगीः प्रेम्णाश्रुकण्ठो हरिः ॥२३॥

कृष्णाज्ञया श्रावयति द्विजेशो
भीष्मात्मजा संलिखितां सुपत्रीम् ।
गुर्वर्थगम्भीरपदां मनोज्ञा-
माकर्षणीं रश्मिमिवात्मनो हरेः ॥२४॥

॥ इति श्रीद्राविडकान्हजीभट्टात्मजबालमुकुन्दभट्टविरचिते
रुक्मिणीमङ्गलाख्ये काव्ये पञ्चमः सर्गः ॥

---

१. यद्यपि अपाणिनीयोऽयं प्रयोगस्तथापि छन्दोऽनुरोधात् प्रयुक्तः ।

## ॥ षष्ठः सर्गः ॥

—:०:—

स्वस्ति श्रीमत्सकलशुभगुणैश्वर्यसेव्याब्जपत्सु
ब्रह्मेशेन्द्रान्तकवरुणकुबेराद्यकैर्लोकपालैः ।
ध्येयेषु श्रीपतिषु परकृपालेषु कृष्णेषु भैष्म्या
रुक्मिण्याः मे तनुलपितमनोमिः प्रणामा भवन्तु ॥१॥

नित्यानन्दघने सदासुखनिधौ सच्चित्तनौ श्रेयसः
संप्रश्नस्त्वयि नेष्यते यदुपते दीनानुकम्पिंस्तदा ।
अस्माकं तु भविष्यतीश कुशलं द्रक्ष्याम यर्हि प्रभो
त्वत्पादाब्जतलं महासुखनिधिं संसारतापापहम् ॥२॥

श्रुत्वा ते भुवनैकसुन्दरगुणान्निर्विश्य संशृण्वतां
स्वान्तं कर्णबिलेन चाशुहरतः संसारतापं प्रभो ।
शुभ्रांशूनिव सूर्यजं गुणनिधे तापत्रयैर्व्याकुलं
त्यक्त्वा ह्रीं विशतीश हृत्त्वयि ममेभो गाङ्गतोये ॥३॥

रूपं काममनोहरं दृशिमतां सर्वार्थलाभं तु यद्
दृष्ट्वा गोमृगपक्षिणोऽपि पुलकं सन्धारयन्त्यङ्ग ते ।
श्रुत्वा मद्धृदयं सदात्वयि विशत्यब्धौ यथा स्वर्धुनी
त्यक्त्वा ह्रीं कुलजां त्रिलोकसुषमाधिष्ण्यात्मभूमोहन ॥४॥

का कन्या पुरुरूपशीलगुणधीयुक्ता कुलीनाकुल-
विद्यारूपवयोऽर्थधामगुणशीलैरात्मतुल्यं पतिम् ।
काले त्वां न वृणीत भो यदुपते कृष्णार्तबन्धो नर-
श्रेष्ठ प्राणिमनोऽभिराम नयनानन्दासुनाथ प्रभो ॥५॥

तस्मात्त्वं हि पतिर्वृतः खलु मया स्वात्मार्पितश्च प्रभो
जायां स्वस्य विधेहि मामिह समागत्यारमेवार्तिहन् ।
मा त्वद्भागमहोऽभिमर्शतु चिदेः पुत्रः समागत्य मां
पञ्चास्यस्य बलिं शृगालवदसौ पद्मायताक्षारिहन् ॥६॥

पूर्तेष्टव्रतदानतीर्थगुरुविप्रार्यार्चनाद्यैरलं
लक्ष्मीशो भगवान् परो यदि मया स्वाराधितो नित्यशः ।
तर्ह्यागत्य गदाग्रजो मम करं गृह्णातु कृष्णः पति-
र्नैवान्ये क्षितिपाः स्पृशन्तु शिशुपालाद्याः खरा गां यथा ॥७॥

श्वो भाविन्युपयामके त्वमजिताज्ञाताखिलै राजभि-
रेवागत्य विदर्भकान् परिवृतः सैन्याधिपैर्यादवैः ।
निर्मथ्य प्रसभेन शाल्वदमघोषापत्यवार्हद्रथ-
सैन्यं ह्युद्वह राक्षसेन विधिना मां वीर्यशुल्कां विभो ॥८॥

त्वामन्तः पुरवर्तिनीं कथमहं बन्धूनहत्वोद्वहे
चेदेवं प्रवदाम्युपायमुपयामात्पूर्वघस्रेऽस्ति वै ।
यात्रास्मत्कुलदैवतस्य महती यस्यां वधूः नूतना
स्थानीयाद्बहिरम्बिकागृहमुपागच्छेत्तदा मां हर ॥९॥

यत्पादाब्जरजोभिरात्मशमलध्वंसाय सत्पूरुषः
स्नानं वाञ्छति पार्वतीपतिरिव स्वान्ताघहन्त्रात्मदम् ।
यर्ह्यब्जाक्ष भवत्प्रसादमधुना न प्राप्नुयां तर्ह्यसूं-
स्त्वद्ध्यानेन मुहुस्त्यजेयमहमेवं जन्मभिस्स्याच्छतैः ॥१०॥

तिमिकूर्मघृष्टिनृसिंहवामनजामदग्न्यरघूत्तम-
हयहंसकाद्यवतारकेषु कदाप्यहं नहि विच्युता ।
तव दासिका ह्यधुनारिभिः पतितास्मि दुःखदवानले
व्रजनाथ जीवय मां कृपामृतदृष्टिवृष्टितरेण वै ॥११॥

अलकावलीवृतमम्बुजाक्षमुदारनाशसमलं रमा-
निलयं त्वदास्यविधूत्तमं निरताविलोकयितुं सखे ।
पदवीं सदा तव लोकये करुणानिधेऽद्य गृहे स्थिता-
द्य विवाहकार्यविधाविमे मम पुष्यिता[1] जनकादयः ।।१२।।

तव सुन्दरास्यदिदृक्षया तृषितेक्षणा नितरां प्रभो
वचनामृतश्रवणेच्छया विकलास्म्यहर्निशमच्युत ।
हरणीव कोकगणैर्वृतासुहरैः कुबन्धुगणैः सदा
निजदासिकेति विचार्य मां हर केशरीव मुकुन्द भो ।।१३।।

प्रथमं स्वदर्शनमादिपूरुष देहि मे करुणानिधे
हृदयानलं शमयाशु मां हि ततो हराद्रिसुतागृहे ।
दमयासुरान् शिशुपालशाल्वजरासुतादिनृपान् विभो
मृगराजवन्मृगधूर्तकान् नगरीं ततो नय दासिकाम् ।।१४।।

यदुनाथ दीन दयानिधेऽसुपते सुधांशुरलौकिक-
स्त्वमसि ह्यहं तु चकोरिका भुवनासुजीवनदोऽस्यहम् ।
शिशुचातकी तृषितानिशं मृगये भवन्तमहर्निशं
सलिलं भवान् शफरी त्वया वियुता धरेऽहमसून् कथम् ।।१५।।

वृकसंवृतां कपिलामिवाद्य हरेऽत्र मां करुणानिधे
शिशुधान्यवप्रमिवाम्बुहीनमहं म्रिये रहिता त्वया ।
अगुरुत्खगो ह्यवलोकते जननीं यथा क्षुधयातुरः
शिशुवत्सको हठदामरुद्धगलो यथा मृगये पतिम् ।।१६।।

अहं तव प्रिया हरे सदास सन्निधौ रमा-
धुना क्षितेर्भरावतारणाय पालनाय वै ।
स्वमार्गवर्तिनां सतां यदोः कुलस्य सम्मुदे
त्वया जनिः कृता ममाप्यतो विदर्भशान्तये ।।१७।।

---

१. पुष्पमिवाचरतीत्यर्थे पुष्पशब्दात् क्विपि तृचि इडागमे च पुष्यिता ।

सहोदरस्तु मां विभोऽद्य वारिधौ निपातय-
त्यतोऽरमेहि गोकुलेश रक्ष रक्ष मज्जतीं ।
महीं यथा कुनक्रतोऽन्यथा न ते कृपालुता
भवेद्धि भक्तवत्सलार्तिहन् हरे कृपानिधे ।।१८।।

यदुनाथ किं ह्यधिकं लिखे निखिलज्ञेष्व(ज्ञकेष्व)बलाल्पधी-
र्ज्वलनेषु वह्निकणो तथा न करोति भिन्नविभासताम् ।
अव भृत्यवत्सल मां व्रजेश दयानिधान हृदेश[1] (हृदीश) ते
चरणारविन्दनिषेवणोत्सुकमानसीं निजदासिकाम् ।।१९।।

इत्येते यदुदेव गुह्यतरसंदेशा मयोक्ता द्रुत-
मस्मिन् यत्करणीयमात्मनि विमृश्याश्वेव तच्छ्रीमता ।
ईशेन क्रियतामिति द्विजवचोभिर्भीष्मजाया हरिः
सन्देशं तु निशम्य तत्क्षणमसौ स्वान्तेन भैष्मीं ययौ ।।२०।।

विप्रस्य ब्रुवतो विदर्भदुहितुः सन्देशकान् श्रीपतिः
स्मृत्वैकान्तरतां प्रियां स्वचरणे दीनानुकम्पी तदा ।
मुञ्चन् लोचनतो जलं पुलकिताङ्गः स्तब्धवाक् प्रेमत-
स्तन्वा द्वारवतीं स्थितोऽभवदसौ प्राणैर्ययौ कुण्डिनम् ।।२१।।

सन्देशं द्विजतो विदर्भदुहितुः श्रुत्वा कराब्जेन तद्
धृत्वा पाणिमुवाच तं द्विजवरं कृष्णो दयालुर्हसन् ।
रुक्मिण्याः हृदयो यथा मयि सदा वर्तेत तस्यां तथा
मत्स्वान्तं भगवन्नहं तु न लभे निद्रां क्षपायामपि ।।२२।।

पूर्वं भीष्मनृपः स्वयं वरमसौ चक्रे सुतायाः पतिं
मामुद्दिश्य तदा विदर्भनगरं शाल्वश्च बार्हद्रथः ।
चैद्याद्याः शतशोऽगमन् क्षितिभृतः कामज्वरव्याकुला
स्तेषां सुष्ठु चकार सत्कृतिमरं रुक्मी बली मैत्र्यतः ।।२३।।

---

१. भूमिकायां संन्धिप्रयोगे सुविचारितोऽयं प्रयोगः ।

तच्छ्रुत्वोपगतस्य भीष्मनगरं ब्रह्मेशशक्रादिभिः
खस्थैर्देववरैर्नृभिः क्षितिगतैः संस्तू[य]मानस्य मे ।
स्वर्णच्छत्रसुचामरव्यजनकैः दिव्ये रथे राजतो
दृष्ट्वैश्वर्यमनादरं च कृतवान् रुक्मीर्षयाज्ञो हसन् ।।२४।।

ज्ञात्वा मय्यनुरागसक्तहृदयां स्वीयां स्वसारं तदा
सम्मन्त्र्यौकसि शाल्वचैद्यमगधेशाद्यैर्नृपैरन्धधीः ।
रुक्म्युद्वाहममन्यत स्वसहजायाः मां द्विषन् वै तदा
दूरीकृत्य हठात्स्वयं वरमसौ क्लेशं स्वपित्रोर्ददन् ।।२५।।

वेदाहं हि निवारितः परिणयो मे द्वेषतो रुक्मिणा-
तो भूपापसदान् जरासुतमुखानुन्मथ्य संख्ये हठात् ।
आनेष्याम्यनवद्यविग्रहवतीं तां मत्परामेधसो-
ऽग्निर्ज्वालामिव विप्रवर्यवचनं सत्यं मयोक्तं तव ।।२६।।

कृष्णो विप्रवरं स्वदैवतमिव श्रीद्वारवत्यां सभा
श्वस्यावासयदात्मनः प्रियतमां हर्तुं विदर्भात्मजाम् ।
गन्तुं तेन सहैव भीष्मनगरं पप्रच्छ पाणिग्रह-
स्यर्क्षं सोऽप्यवदद्द्विजोत्तमचरो द्वारावतीशं प्रति ।।२७।।

विज्ञायाथ विवाहभं द्विजवराद्रु क्म्याः हरिः सूतमा-
हूय प्राह सुगुप्तमेव भवता संयुज्यतां मे रथः ।
इत्याश्रुत्य निजेश्वरस्य वचनं द्राक् दारुकः स्यन्दनं
संयोज्याश्ववरैश्चतुर्भिरतुलं तूर्णं ययौ श्रीपतिम् ।।२८।।

युक्तं सैन्यबलाहकाब्दसुमनः सुग्रीवकाख्यैर्मनो-
वेगैरिन्दुकरोज्ज्वलैः सुतुरगैः श्यामैककर्णैःरथम् ।
दिव्यं दिव्यसुवर्णरक्तजटितं दिव्यायुधाढ्यं ह्युपा-
नीय प्राञ्जलिरग्रतो भगवतस्तस्थौ रहो दारुकः ।।२९।।

आरुह्याथ रथं स्वयं द्विजवरं ह्यारोप्य तं तूर्णगै-
रश्वैर्भीष्मसुता सुद्गार्ह (हार्द?) रशनाकृष्टोऽप्यलक्ष्योऽखिलैः ।
आनर्तात् क्षपयैकया स च विदर्भानागमन्नात्मनो
भक्त्यैवाप्तिरिति प्रबोध[य]दिव स्वीयेषु कृष्णो हरिः ।।३०।।

।। इति श्रीद्राविडकान्हजीभट्टात्मजवालमुकुन्दभट्टविरचिते
काव्ये षष्ठः सर्गः ।।६।।

## ॥ सप्तमः सर्गः ॥

—:o:—

पुत्रस्नेहवशं गतोऽथ नृपतिर्भीष्मोऽब्जजां स्वां सुतां
हृद्वाग्वर्ष्मभिरीश्वरे यदुपतौ सक्तां प्रजानन्नपि ।
दास्यंश्चेदिसुताय तां श्रुतिमिवाम्बष्ठाय वैवाहिकं
कर्माकारयदादरेण सकलैर्भृत्यैः सुतप्रीतये ॥१॥

गन्धोदैर्बहुसिक्तमार्गविशिखाराजाध्वपण्यस्थलं
सम्मृष्टागुरुधूपितोदवसितं चित्रध्वजास्तोरणैः ।
द्वारि द्वारि गृहस्य रुक्मकलशैः रम्भाभिराभूषितं
जातं कुण्डिनपत्तनं सुरपतिस्थानीयवच्चोत्सवे ॥२॥

स्त्रीपुंसैः शुचिविग्रहैरमलवस्त्राभूषितैर्गन्धसृङ्-
माल्याभूषणवद्भिरिष्टनगरी जुष्टा विदर्भाधिपैः
गीर्वाणैरमरावतीव पुरुहूतस्यास भैष्म्युद्वहे
पूर्णाहस्तिरथाश्वपत्तिनिचयैः सद्भिः सुवर्णाञ्चितैः ॥३॥

गीर्वाणान् स्वपितॄन् समर्च्य विधिवद्राजा विदर्भाधिपो
विप्रान्वेदविदोऽन्नकैर्बहुविधैः सम्भोजयित्वादरम् ।
स्वां कन्यां प्रतिमङ्गलं सविधिना संवाचयामास तै-
र्मन्त्रज्ञैर्ग्रहशान्तयेऽनिलसखायं ह्याजुहावाशु वै ॥४॥

अथर्ववित् पुरोधास्तु भैष्मीमाह करे स्पृशन् ।
प्रेम्णा वात्सल्यपूर्णागों(पूर्णाङ्गां)गृहमध्ये स्थितां शुभाम् ॥५॥

तैलस्पर्शं कुरुष्वाद्य स्वाङ्गोन्मर्दं च कारय ।
चारुपङ्कैः सुते भैष्मि गणेशादींश्च पूजय ।।६।।

श्रुत्वा पुरोधसो वाक्यं कृष्णप्रियतमा यदा ।
न किञ्चिदाह दुःखार्ता तदा माताह तां सुताम् ।।७।।

प्राणेऽद्य तैलं स्पृश पुत्रि कारय
प्रियालसिद्धार्थहरेणुपंङ्ककैः ।
उद्वर्तनं नापितकन्यया भरं
स्नात्वा तथा पूजय विघ्ननाशकम् ।।८।।

राजा महान् वै दमघोषपुत्रको
जलेशशक्रान्तकवित्तनाथजित् ।
प्रदास्यति त्वां शिशुपालवर्मणे
भ्राता प्रसन्ना भव पुत्रि जीवने ।।९।।

तिष्ठात्मजे त्वं कनकस्य पीठके
वैवाहिकस्नानमरं कुरु प्रिये ।
ऊष्णोदकैर्मङ्गलवस्तुसंयुतै-
रित्याह माता प्रणयेन रुक्मिणीम् ।।१०।।

श्रुत्वैव मातुर्वचनं सुदुःखिता
जाताथ सा वाचमुवाच मातरम ।
ज्वरेण तीव्रेण युतास्मि मे मनः
संलीयते धारयितुं न शक्यते ।।११।।

सकम्पशीतज्वरतापतोऽनिशं
दिनत्रयान्मे परितप्यते तनुः ।
अतो न शक्ये गदितुं मुखेन तत्
स्नानादिकं कर्तुमहं कुतः प्रसो ।।१२।।

तदाङ्कमध्ये विनिधाय रुक्मिणीं
सुतप्तदेहां स्रवदश्रुलोचनाम् ।
उद्विग्नचित्तां वृकसंवृतां मृगी-
मिवावदत्सा जननी व्यथान्विता ।।१३।।

हन्तातुरा मे दुहिताभवत्कथं
चैद्यात्मजेनोपयमस्य वार्तया ।
हेतुं न जानेऽद्य करोमि किं व्यथौ-
षधीर्यथा जीवति जीवना मे ।।१४।।

सुते प्रसूपितृधनेऽद्य मातरं
मां ब्रूहि दुःखस्य निदानमातुरे ।
प्रसन्नचित्ता भव जीवय प्रसूं
दृष्ट्वा व्यथां ते विकलास्मि जीवने ।।१५।।

यस्या विवाहो भवति प्रसन्नहृद्
भवेत्कथं त्वं व्यथयातुरासि हा ।
सुते वदारं जननीं च जीवे-
त्युक्त्वातुरां तां कशिपावशीशयत् ।।१६।।

ततोऽतिखिन्नाः पितरौ सहोदरा
विलोक्य भैष्मीं ज्वरतप्तविग्रहाम् ।
अन्ये च ये ज्ञातिसुहृद्द्विजातय-
श्चक्रु[श्]चिकित्सां सुभिषग्भिरादरात् ।।१७।।

तस्यास्तु रुक्मी हठतोऽखिलं कर-
ग्रहस्य कृत्यं ग्रहशान्तिपूर्वकम् ।
अथर्वविद्विप्रगणैर्विधात -
श्चचार दास्यन् शिशुपालकाय तान् ।।१८।।

दृगश्रुपूरं वसनं निषिञ्चतीं
ज्वरेण तीव्रेण सुतप्तविग्रहाम् ।
दुःखार्णवे सम्पतितां स्वसार-
मुवाच रुक्मी कुरु कृत्यमात्मनः ।।१९।।

वृकान्मृगीवद्धि विवाहकार्यतो
भीतां स्मरन्तीं हरिमात्मरक्षकम् ।
सुतामथोत्थाप्य महाग्रहेण तां
तैलादिकस्पर्शमकारयत्प्रसूः ।।२०।।

सुस्नातां सुदतीं शुभाहतनिचोलालङ्कृतां रुक्मिणीं
चूडारत्नसुवर्णभूषणगलालङ्कारकेयूरकैः ।
नासालङ्क्रिययाङ्गुलीयककरभ्राजिष्णुकाञ्चीतुला-
कोट्याद्यैरभिभूषितां सुविदधुस्ते कौतुकैर्मङ्गलाम् ।।२१।।

मुक्तागुम्फितकुन्तलारुणनिचोलादर्शके स्वं मुखं
दृष्ट्वा कुन्दरदं वरोष्ठमलकभ्राजिष्णुसन्नासिकम्
एणीलोचनमुज्ज्वलं ह्यनुपमं भैष्मी तथा रुक्मिणो-
ऽत्यन्यायं नयनाश्रुभिः स्ववसने संसिञ्चती दुःखिता ।।२२।।

दृष्ट्वा तां स्रवदश्रुधारविकलां भैष्मी कथं नेत्रतो
ऽश्रुन्यासं स्रवतीति मे वद सुते ह्युद्गायतीनां तव ।
स्त्रीणां मङ्गलमित्थमात्मजननीवाक्यं समाश्रुत्य सा
तामाहाम्ब मिषेण मे नयनयोरुद्वर्तनांशं गतम् ।।२३।।

ततो विदर्भो दुहितुर्विवाह-
कर्माकरोत्पित्रमरार्चनादि ।
सम्भोजयामास सुभक्ष्यभोज्यै-
रन्नैरलं वेददिवो द्विजाग्र्यान् ।।२४।।

नवीनवासो युगलेन भूषणैः
सुभूषितां मन्त्रजलाभिषिञ्चिताम् ।
विवाहसूत्रैः कृतमङ्गलां सुता-
मुद्दिश्य कर्माण्यखिलान्यकारयत् ।।२५।।

सामर्ग्यजुर्मन्त्रवरैर्द्विजाग्र्या
भैष्म्या सुरक्षां विदधुर्विधिज्ञाः ।
अथर्वणाचार्यपुरोहितोऽग्नौ
जुहाव विप्रैर्ग्रहशान्तये वै ।।२६।।

हिरण्यरूप्यांशुकरक्तकोटी-
स्तिलान् सुकृष्णान् गुडमिश्रितांश्च ।
प्रादादलङ्कारयुताः सुधेनूः
राजा विधिज्ञो द्विजमुख्यकेभ्यः ।।२७।।

सस्तिन् (? अस्मिन्) विवाहे सुहृदस्समस्ता-
स्समागमन्भूपतयश्च प्रेम्णा ।
कृष्णद्विषो राजमदान्धनेत्राः
स्वाकारिता पामररुक्मिणा ते ।।२८।।

सर्वे जनाः सद्वसनाः सुवेषाः
सुवर्णरत्नाभरणोज्ज्वलाङ्गाः ।
महाप्रमो[दा]दुपयामकार्यं
चक्रुर्जगुर्वाद्यमवादयंश्च ।।२९।

भैष्मीमृते कोऽपि जनो न दुःखी
ज्वरी कृशः शुष्कहृदास्यपद्मः ।
विलोक्यते तत्र यतो व्रजेशा-
सक्ता वियोगाद्विकला भवन्ति वै ।।३०।।

तस्यास्तु किञ्चिन्न सुखाय वस्त्र-
विभूषणं माल्यसुगन्धकानि ।
भक्ष्यं च भोज्यं स्वसखीवचश्च
गानं समीचीनतरं बभूवुः ।।३१।।

दुःखाय जातं सकलं पदार्थं
क्षुधार्दिताया इव भीष्मपुत्र्याः ।
कृष्णं विना प्राणपतिं व्रजेशं
देहोऽपि भाराय बभूव तस्याः ।।३२।।

सूचीतोदमिवाचरत्यलमलङ्कारो वरं रायग्निवद्
वस्त्रं वृश्चिकपङ्क्तिवत्सुमनसां मालाग्निज्वालायते ।
वायुर्दक्षिणदिग्भवो मलयजालेपोऽग्निलेपायते
भैष्म्या बन्धुजनोऽरिवत्तनुरलं भारायते तं विना ।।३३।।

द्विजवर्यमानय चाशु दैवविदं पदं प्रणमामि ते
सखि पृच्छ तं धनमर्घ्य नस्य कदागमिष्यति सत्पतिः ।
व्रजनाथ ईश विधीश्वरो विरहानलं शमयन् करै-
र्मम जीवनं प्रददन् बलाद्दमयन् दितेस्तनयानरम् ।।३४।।

जलदो यथाशु जलैर्दवं शमयन् क्षितिं रुहयत्यलं
विरहानलं शमयन्कदा सुखयत्वरं मम मानसम् ।
सजलाम्बुदासितविग्रहश्चपलांशुको व्रजपात्मजो-
ऽद्य गमिष्यतीति वदेद्धि तस्य पदावनि[ज्य]जलं पिबे ।।३५।।

प्रियनाथ कृष्ण दयानिधे व्रजनाथ मां शरणं गतां
विरहानले पतितामवाद्य करीन्द्रवत् सरसीतले ।
कमपीह रक्षकमात्मनो नहि लोकये जगतीतले
पतिता विधीशमुखामराश्च भवन्ति कालशयोर्मुखे ।।३६।।

इति रुक्मिणी वचनं सखीश्रवणं विधाय सुदुःखिता-
श्रुमुखी तदैव तु दैवतज्ञमकारयद्द्रहसीष्टदम् ।
प्रणतिं विधाय धनं समर्प्य शुभासनस्थितमाशु तम्
समपृच्छदात्मपतिं व्रजेशसुतं हि भीष्मसुतातुरा ।।३७।।

व्रजेशनन्दनस्तु मत्पतिः कदागमिष्यती-
ति खेचरज्ञ ब्रूहि मां विचार्य सत्वरं बहु ।
प्रसन्नहृद्द्विजोत्तमोऽप्युवाच तां सुते शृणू-
पयाम[1]घस्त्र एव ते पतिःसमेष्यति ध्रुवम् ।।३८।।

त्यजाद्य शोकसन्ततिं चरेण साकमेव ते
पतिस्तु वर्ततेऽयने ब्रुवेऽद्य सत्यमेव ते ।
हरिष्यति व्रजेशजोऽद्रिकन्यकागृहे बलाद्
विदर्भराजकन्यकां दमं विधाय वैरिषु ।।३९।।

सुधोपमं वचस्तु तस्य भीष्मनन्दिनी हृदा-
दरं विधाय विप्रवर्यमर्च्य वस्त्ररत्नकैः ।
ननाम तं द्विजोत्तमं करेण तत्पदं स्पृशन्-
त्युवाच भो द्विजाग्र ते वचोऽस्तु तथ्यमेवहि ।।४०।।

ततो जगाम मन्दिरं प्रशस्य तां विदर्भजां
द्विजर्षभोऽथ रुक्मिणी प्रसन्नहृद्रहः स्थिता ।
जगौ व्रजेशनन्दनं स्वभृत्यवश्यमीश्वरं
दयार्णवं स्वभक्तदुःखहारिणं सुखप्रदम् ।।४१।।

वसुदेवनन्दन देवकीसुत कृष्ण गोकुलनाथ मे
दृशि गोचरत्वमुपैष्यसि त्वमलं कदा शमयन् शुचः ।
उदधिं घटोद्भववद्धनुः स्वनतोऽरिहृत्कमलं दृढं
सुविदारयन् मृगराजवत्करिसङ्घमाशु बलेन वै ।।४२।।

---

1. मातृकायां 'ह' इति वर्णोऽधिकः ।

अवलोकये करुणानिधिं गरुडध्वजाढ्यरथस्थितं
कनकांशुकं घननीरदाङ्गमहं कदा चपलायुतम् ।
नवनीरदं रविमण्डलस्थमिवातपत्रसुचामर-
व्यजनैरुपस्कृतमद्भुताभरणैर्युतं वनमालया ।।४३।।

मणिकुण्डलायुतदीर्घकर्णविराजितं सुकिरीटिन-
मलकावलीवृतचारुकंजमुखं ह्युदारनसं हरिम् ।
जलजाक्षमम्बुजहस्तपादमहीन्द्रभोगभुजं कदा
वरकौस्तुभाङ्गदकङ्कणादिविभूषितं च विलोकये ।।४४।।

अरिशङ्खपद्मगदासिचर्मधनुः शरान्प्रदधत्पतिः
शरणप्रदोद्भुतविक्रमः सुषमालयो व्रजपात्मजः ।
स्वरथं कदा ह्यवरोहयिष्यति मां प्रगृह्य करे बलात्
स्वकरेण केशरिवत् स्वभागमलं दमं प्रददत्रिपौ ।।४५।।

स्मरमोहनं व्रजराजनन्दनमार्त्तिनाशनमच्युतं
निजभृत्यवत्सलमात्मनाथमुदारकीर्तिमजामरम् ।
परमप्रमोदसमुद्रमीशविधीन्दुशेषमुखैः स्तुतं
करुणार्णवं समयाहि भीतजनाभयप्रदमीश्वरम् ।।४६।।

अमरद्रुमाङ्घ्रिमशेष शव्यं...[?...]...परयसुधासुतं
वसुधाभरासुरराजकाननपावकं ह्यतुलप्रभम् ।
सुरविप्रधेनुसमुद्रवर्द्धकमच्युतं यदुवंशकं
कमलप्रकाशकरं विधर्मतमो विनाशकरं भजे ।।४७।।

गरलाविलस्तनपूतनानिकषात्मजाजगदात्मज
क्षतजाशनापि जिघांसया स्तनमर्प्य मुक्तिमवाप यत् ।
बहुजन्मभिः कृतयोगिनामतिदुर्लभामुचितां सतां
स हिभृत्यवेशवतोऽप्यदोषदृशिर्दयालुतरः पतिः ।।४८।।

अखिलेशमौलिविभूषणाग्रविलुण्ठनस्तुतपीडकः
श्रुतिमौलिरत्नसमीडिताङ्घ्रिसरोरुहोऽप्यसमाधिकः ।
निजभक्तभक्ततरस्त्रिधीश्वर आनतेच्छितदः पति-
र्मम दुःखसिन्धुविनाशको दृशि गोचरत्वमियात्कदा ।।४९।।

।। इति श्रीकान्हजीभट्टात्मजबालमुकुन्दभट्टविरचिते
रुक्मिणीमङ्गलाख्ये काव्ये सप्तमः सर्गः ।।

## ।। अष्टमः सर्गः ।।

—:o:—

ते विप्रसूता ययुरश्वहस्ति-
पदातिवर्गैर्दमघोषराजम् ।
लोकाधिपैश्वर्ययुतं चिदीशं
प्राप्याश्वपृच्छन् कुशलं विनीताः ।।१।।

भीष्मो नृपः पुत्रसमन्वितो हि
सपुत्रभृत्याप्तसहोदरं त्वाम् ।
सम्पृच्छते शं कुशलं चिदीश
प्रेम्णा स्मदास्येन महादराच्च ।।२।।

दृष्ट्वा वदित्वा कुशलं नृपस्य
भीष्मस्य पुत्रैः सहितस्य विप्राः ।
पत्रीं ददुस्तां लिखितां हि रुक्मिणा
तस्मै पुनस्ते वचनं समूचुः ।।३।।

तूर्णं विवाहं शिशुपालनाम्नः
सुतस्य चेदीश कुरुष्व मोदात् ।
या रुक्मिणी द्वारवतीश्वराय
दत्ता विदर्भेण पुराथ रुक्मिणा ।।४।।

निवार्य तस्माच्छिशुपालकाय ते
सुताय दत्तां स्वबलैर्गृहाण ताम् ।
हस्त्यश्वचक्रीन्वरवस्त्रभूषणं
सुवर्णरौप्यं सफलाक्षायुधम् (?क्षतायुधम्) ।।५।।

गृहाण तूर्णं तिलकं शिशोर्वै
कृत्वाथ प्रस्थानमरं कुरु त्वम् ।
सर्वैस्तु सैन्यैः सह बान्धवाप्तै-
रागच्छ वैदर्भपुरं सुखेन ।।६।।

तां रुक्मिणो भीष्मनृपात्मजस्य
दृष्ट्वाथ पत्रीं वचनं निबोध्य ।
उवाच तांश्चेदिपतिः सुतस्य
स्वाहं करिष्ये हि विवाहमेव ।।७।।

आगत्य चेद्द्वारवतीश्वरो वै
विदर्भराजस्य सुतां हरेत्तदा ।
योत्स्याम तेनाथ वयं ससैन्यका
यास्यामहे कुण्डिनमात्मबान्धवैः ।।८।।

इत्थं वदित्वाथ समर्च्य तान्वरै-
र्वरेण चाभोजयदन्धसादरात् ।
लग्ने शुभे चेदिपतिः सुतस्य तै-
र्विप्रैः प्रमोदात्तिलकं ह्यकारयत् ।।९।।

भीष्मस्य पुत्र्यास्तु विवाहलग्न-
मुक्त्वाप्य पूजां चिदिपस्य राज्ञः ।
पत्रीं गृहीत्वाशु पुनः पुरीं ते
संयाप्य (सम्प्राप्य) राज्ञे ददुराहुरादरात् ।।१०।।

सुतस्य चैद्यः करपीडनस्य
स्वपुत्रमित्रेषु लिलेख पत्रम् ।
अस्तोदयागावधि ये क्षितीशा-
हूत्यै हि तेषां परमादरेण ।।११।।

पुत्रायाभ्युदयोचितं द्विजगणैर्मन्त्रज्ञकैः सोऽखिलं
कर्माकारयदादरेण दमघोषाख्यो नृपः साहसात् ।
तेभ्यो गाः समलङ्कृतास्तिलगुडान्वासो हिरण्यं मणिं
रूप्यं चार्पयदात्मजोदयतृषा संतर्प्य दिव्यान्धसा ।।१२।।

द्वात्रिंशध्वजिनीभिरश्वपदकैः स्वर्णोज्ज्वलैःस्यन्दनै-
र्नागैश्चातिमदोत्कटैर्ध्वजपताकाभूषणालङ्कृतैः ।
वीरैः कावचिकैर्वरायुधधरैर्युक्ताभिरासंवृत-
श्चैद्यः स्वात्मजमग्र्यदन्तिनि समारोह्यायया कुण्डिनम् ।।१३।।

ढक्कादुन्दुभिमर्दलानकघनानद्धादिकानां गजा-
जाने येषु जनैःस्यदेन नितरां सन्नादितानां रवैः ।
कुर्वन्भिन्नशिरः श्रवं जनमनीकैर्भूतलं कम्पयन्
सेनाघातरजोभिरन्धतमसं लोके सृजन्नाययौ ।।१४।।

मार्गे स्यन्दनको व्यवर्तत गजः पङ्गुर्बभूवार्वभि-
र्गृद्धोऽधिष्ठितवान् ध्वजां ध्वजपताकास्त्रोटिता वायुना ।
रक्तं वारिधरा ववर्षुरखिलानीकात्मकम्पो भवच्
च्चैद्यस्यात्मजपाणिपीडनमहो कर्तुं पुरं गच्छतः ।।१५।।

इन्द्रारिध्वजिनीशतातुलमहाभाराकुला भूस्तदा
भेरी मर्दलतालकानकयशो मण्डादिकानां भृशम् ।
निर्ह्लादस्य मिषेण सार्तनिननं(निनदं)चुक्रोश हेति प्रभो
दीनानाथ दयानिधान भगवन् कृष्णार्तिहन् पाहि माम् ।।१६।।

श्रुत्वा रावतरं चिदीशतनयानीकस्य नारी नराः
संविग्ना अभवन्भृशं हि जगतो नाशं तदा मेनिरे ।
उल्कापातमरं बभूव धरणीकम्पश्च कम्पो हृदो
लोकानां मलिनं बभूव सलिलं चैद्याधिपे ह्यागते ।।१७।।

ज्ञात्वा चैद्यनृपं समागतमथो भीष्मो नृपो रुक्मिणः
प्रीत्यैर्मित्रसुहृद्भिरात्मसहजैः साकं यथावप्रतः ।
पुत्रैः रुक्मिमुखैश्च शङ्खसुयशो भेरीमृदङ्गस्वनै-
र्विप्रैर्मङ्गलवस्तुभिर्ध्वजपताकाद्यैः सुवर्णांशुकैः ।।१८।।

श्रुत्वागतं तं शिशुपालमत्र
विदर्भराजेन्द्रसुतातिमोहम् ।
गता सती व्याघ्रमिवार्जुनी तत्
क्षणे जहातुं ह्यसुमुद्यतासीत् ।।१९।।

चित्ते धृतो वै व्रजराजनन्दनः
पतिर्मयातो नहि मां स्पृशत्वयम् ।
तस्मादहं त्वद्य हरेः पदाब्जकं
विहाय चित्तेऽसुमरं त्यजामि वै ।।२०।।

व्रजजीवनेशवियोगकाननवह्नितः श्वसनाकुलात्
सुदृशोर्विदर्भमहीभृतो दुहितुर्दृशोः कलहस्तदा ।
समभूत्तयोः प्रथमः(मा)शरीरमलं मुहुर्दहते परो(रा)
जलधारया शुचिशीतलं कुरुते हरीक्षणकाम्यया ।।२१।।

तस्यां क्षपायामभवत्पुनर्हि
स्वप्नस्तु भैष्म्याः सुखदासुरक्षकम् ।
मा भैर्विदर्भेशसुते रमेश्वरो
हरिष्यति त्वां गिरिजालये ध्रुवम् ।।२२।।

दत्वा दमं दुष्टगणेषु कृष्णो
रुक्म्यास्यमत्यन्तकुरूपमेव ।
कृत्वा ध्रुवं त्वां स नयिष्यति स्वां
पुरीं बलाच्छ्रीवसुदेवपुत्रः ।।२३।।

स्वप्नान्तमेवाशुगतां सुतां तां
मातात्रवीद्रुक्मिणि सौधमाशु ।
सखीभिरारुह्य समीक्ष चैवं
गजस्थितं छत्रसुचामराढ्यम् ।।२४।।

श्रुत्वा प्रसोर्वाक्यमतीव घोरं
न ह्युत्तरं वक्तुमरं क्षमासीत् ।
भैष्मी दृगब्जाश्रुततिं मुमोच
दुःखाद्गिरिस्रोत इवाकुला सा ।।२५।।

माताह तां पुत्रि वचोऽद्य मे शृणु
हठस्त्वया नैव विवाहकार्यके ।
कार्योऽग्रजस्यैव वचो यथा न वै
नश्येत्तथा त्वं कुरु सत्कुलात्मजे ।।२६।।

अधिकं ब्रवीषि यदा प्रसो भवतीं शपामि रुषा तदा
वचनं दहेज्ज्वलनोऽग्रजस्य मुखे पतत्वनिशं पविः ।
हृदयक्षते सहजैः कृते लवणं ददासि पुनः पुनः
पतिरस्ति मे व्रजनाथईशविधीन्दुशेषमुखस्तुतः ।।२७।।

अवितो मनुः प्रलये झषाकृतिनाविता किटिरूपिणा
पृथिवी हतो दितिजो धृतो कनकाचलः कमठाङ्गिना ।
असुराधिपो नरसिंहविग्रहधारिणा रभसा हतो
वटुवामनाकृतिना बलिश्चछलितो हता भृगुणा नृपाः ।।२८।।

दशमस्तको रघुरूपिणाशुहतोऽविता जनकात्मजा
हलधारिणा क्षितिभारदैत्यविनाशिना वसुधाविता ।
जिनरूपिणा सुमनो द्विषः सुविमोहिताः कलिजा नृपाः
द्रमिताश्च कल्किवपुर्धृता यदुपेन येन स मे पतिः ।।२९।।

अवलोकनीयतरः पतिः परमः कृपालुतरो हरि-
र्यदुपालको व्रजपालको जनपालकः श्रुतिपालकः ।
स हि दीनबन्धुरिहाद्य रक्षतु मां विचार्य निजां स्त्रियं
खरघृष्टिभद्रविडालतुल्यमहं कदापि न लोकये ॥३०॥

इति रुक्मिणीगदितं निशम्य बभूव सा विकला प्रसूः
पुनरुत्तरं न ददौ सुतां हृदयेन कृष्णपदे रताम् ।
अवलम्ब्य धैर्यमुवाच पुत्रि तव प्रणन्त्विह रक्षतु
निजभृत्यमानदवासुदेव उदारकीर्तिरदेवहा ॥३१॥

चैद्यं विदर्भाधिपतिः समेत्य
समित्रबन्धुः सह सैन्यकस्तम् ।
सम्पूजयामास सुवर्णवस्त्रा-
लङ्कारकैः पुत्रमुदेहया सः ॥३२॥

निवेशयामास ससैन्यबान्धवं
चैद्यं सपुत्रं सह वाहनं गृहे ।
विनिर्मितेऽन्ये वितताम्बरे पयः
पक्वान्नपूर्णे बहुखड्वया(?खट्वया)न्विते ॥३३॥

दृष्ट्वा तं शिशुपालमुन्नतहनुं लम्बाधरं ह्रस्वदृङ्
नासं व्याघ्रमुखं महोदरगलं सूक्ष्मश्रवं काकवत् ।
कृष्णं गोश्रुतिविप्रधर्मसुमनः शत्रुं बलौजास्पदं
भीष्मो दुःखयुतो बभूव तनयां स्मृत्वा निजां रुक्मिणीम् ॥३४॥

चित्ते प्राह नृपो मया यदि रमानाथः समाराधितो
धर्मेणार्तिविनाशो (?विनाशको) द्विजकुला नित्यं प्रजाःपालिताः ।
तर्ह्येवाश्रुमुखोऽद्य गच्छतु पुरं चैद्यो ह्यसंप्राप्य मे
कन्यामिन्दुमुखीं हरेद्यदुपतिः कृष्णः समागत्य वै ॥३५॥

ततः प्रजा वीक्ष्य चिदीशपुत्रं
पाषाणगात्रं कनकासनस्थितम् ।
किरीटिनं चामररुक्मदण्ड-
क्षत्रैर्युतं रूपधरं कलिं वै ।।३६।।

प्राहुर्वरोऽयं नहि रुक्मिणीसमः
कठोरगात्रो ह्यतिनिन्दितस्तनुः ।
यर्हि स्वधर्मैरखिलाधिपो हरिः
संराधितोऽस्माभिरतो रमेशः ।।३७।।

आगत्य शीघ्रं हि हरेद्विदर्भक-
राजेन्द्रजां रुक्मिमुखं कुरूपयन् ।
चैद्यस्तु भैष्मीमनवाप्य दुःखितो
गच्छेत्स्वकीयां नगरीं भरं रुदन् ।।३८।।

भीष्मस्तु वृद्धोऽपि न बुध्यते यत-
श्चैद्याय दातुं तनयां समुद्यतः ।
तस्माद्रमेशो निजभृत्यनारद-
सम्भाषितं सत्यतरं करोत्विति ।।३९।।

तत्रागतश्चैद्यसहायकारको
जरासुतो विंशतिभिस्त्रिभिर्युतः ।
अनीकनीभिः सुसमर्थवाहन-
पुम्भिः मृधं कर्तुमिवोत्सवे बली ।।४०।।

शाल्वः सहायार्थमरं समागत-
स्त्रयोदशानीकयुतो महाभटः ।
सदन्तवक्रश्च महाबली महा-
सेनायुतोऽन्ये च सहस्रशो नृपाः ।।४१।।

यदा समागत्य हरेर्द्विदर्भजां
कृष्णो बलाद्यैर्यदुभिः समन्वितः ।
यो[त्]स्याम तेनात्र वयं सुसङ्गता-
स्सर्वे बला निश्चितमानसा त्विति ।।४२।।

राज्यश्रियो नद्धमदाश्च राम-
कृष्णद्विषः साधयितुं कुमारीम् ।
चैद्याय यत्ता निजसैन्ययुक्ताः
सर्वे नृपाः कुण्डिनमागतास्ते ।।४३।।

यद्भीत्या चतुराननोऽपि कुरुते तीव्रं तपोऽब्जस्थितो
विष्णुर्वारिनिधावनन्तशयने शेते सदेलावृते ।
शूली वासमरोच[य]न्नरवरैर्हीनेऽमरेशाः सदा
नासासंस्थितजीवना : समभवन् सोऽयं चिदीशोऽसुरः ।।४४।।

यः स्वस्यैव बलेन शक्रवरुणादींल्लोकपालान्वशे
कृत्वा भूमिभृतश्च भूविवरगांल्लोकांश्च सर्वासुरान्[1] ।
अत्युन्नद्धमनोरथो हि विषयान् भुञ्जन्न तृप्तोऽभवत्
तस्यानन्दभवे नृपाः समगमंस्तंकुण्डिनं कोटिशः ।।४५।।

तान् सर्वानधिगम्य सत्कृतिमसौ रुक्मी चकारादरात्
तस्मिन्नेव गृहे निवासमकरोत्तेषां महामोदतः ।
द्वारे वाद्यमवादयन् बहुविधं वाद्यप्रवीणा नराः
उत्साहेऽन्नवरेण तृप्तिमगमन् सर्वे ससैन्या नृपाः ।।४६।।

।। इति श्रीद्राविडकान्हजीभट्टात्मजबालमुकुन्दभट्टविरचिते
रुक्मिणीमङ्गलकाव्ये अष्टमः सर्गः ।।८।।

---

१. मातृकायां 'सर्पासुरेशान् हठात्' इत्यंशः 'ल्लोकांश्च सर्वासुरान्' इति अस्य कृते तत्रैव पत्रप्रान्ते प्राप्तः ।।

## ॥ नवमः सर्गः ॥

—:०:—

प्रातः सुमुत्थाय यदूत्तमा नृपाः
स्वस्वामिने द्वारवतीश्वराय हि ।
कर्त्तुं प्रणामं हरिमन्दिराजिरं
जग्मुस्त्रिलोकैकमनोहरं परम् ॥१॥

आस्थानधिष्ण्यं ह्यवलोक्य शून्यं
पप्रच्छुरन्तःपुरचारिणं वै ।
कथं न निद्रान्तमवाप कृष्णो
वेला व्यतीता वद कञ्चुकिंस्त्वम् ॥२॥

तानाह सो रात्रितुरीययाम-
शेषेऽसुनाथोऽद्य समुत्थितो वै ।
अहं न जाने क्व गतोऽस्ति कृष्णः
स्वीयायुधान्गृह्य विभूषणाढ्यः ॥३॥

ते मन्दुरायां निजजीवनस्य
सूतं रथाश्वाननवाप्य खिन्नाः ।
ऊचुर्हि तेनैव बुधेन साकं
ध्रुवं गतो लक्ष्यतरो पतिर्नः ॥४॥

खेदातुरांस्तानवदद्बलोऽद्य
ज्ञातं मया यत्र गतोऽस्ति कृष्णः ।
द्विजेन साकं श्रृणुतादरेण
वृत्तं समस्तं कथये समासात् ॥५॥

विदर्भराजस्य सुतास्ति रुक्मिणी-
हृद्वाक्शरीरैर्निरता ममानुजे ।
रुक्मी तु दातुं शिशुपालकाय
समुद्यतोऽस्तोऽत्र तया समीरितः ।।६।।

समागतो विप्रवरस्तु तेन
साकं ध्रुवं कुण्डिनमेव कृष्णः ।
एको गतो भीष्मसुतां हि हर्तुं
वदाम्यहं तस्य मतिं किमद्य ।।७।।

यत्रागता भूपतयः समस्ता
मम द्विषोऽस्तोदयगोत्रपालाः ।
समर्थवाहध्वजिनीयुतास्ते
संसाधितुं चैद्यसुताय कन्याम् ।।८।।

तस्माद्भविष्यत्परिराजतः कलि-
र्ध्रुवं हि कृष्णेन हरिष्यताबलाम् ।
चित्ते विचार्येति बलो निजानुज-
प्रेम्णाकुलोऽरं मनसा जगाम तम् ।।९।।

ततः समाहूय वरूथिनीपति-
मुवाच रामो भवताधुनागमः ।
कार्यश्चमूभिः सह कुण्डिनं पुरं
यामोऽद्य कृष्णस्य सहाय काम्यया ।।१०।।

षट्पञ्चाशतकोटिभिर्यादवानां
युक्तो रामः कुण्डिनं द्राग्जगाम ।
कृष्णस्योद्वाहार्थमेव ते सद्भि-
र्नागैरश्वैश्चक्रिभिः पत्तिभिश्च ।।११।।

अमूल्यवस्त्राभरणैर्मनोहरै-
र्यदुप्रवीरैर्वरवाहनायुधैः ।
कृष्णप्रियैः कृष्णसमानविक्रमैः
समन्वितो वृष्णिवरैर्बलो ययुः ।।१२।।

भेरीमृदङ्गाद्यसहस्रवाद्यै-
र्गजार्वसंस्थैर्हृदयप्रियैर्युतः ।
पताकिनां कोटिभिरग्रगैर्धना-
ध्यक्षो सुयक्षैरिव कृष्णमाययौ ।।१३।।

भारैरनन्तस्य शिरो नतोऽभवद्-
भूमिः भृशं कम्पमवाप तत्क्षणे ।
यानस्थिता देवगणाः मुदान्विता
जयेति वाचं मुहुरूचिरे तदा ।।१४।।

शेषोऽचलाभारमतीव मुत्प्रदं
मेने निजेशध्वजिनीजनस्य वै ।
समस्तदैत्यापहरं वराङ्गना-
नङ्गार्तिनाशं प्रियगात्रभारवत् ।।१५।।

तं नारदाद्या ऋषयोऽब्रुवन्महा-
मोदान्विता राममतीव मोददम् ।
त्वं कृष्णचन्द्रस्य विवाहमद्य वै
सुखेन भैष्म्याः कुरु दण्डयन् द्विषः ।।१६।।

कृष्णो जयेत् सर्वरिपून् हिमाद्रि-
कन्यागृहे भीष्मसुतां हरेच्च ।
दिवि स्थिता देवगणाः क्षितिस्था
नराः समन्तादिति वाचमूचुः ।।१७।।

बलेन साद्धं महता सहोदर-
स्नेहप्लुतः कुण्डिनमागतो द्रुतम् ।
शृण्वन्विचित्रं वचनं दिवौकसां
रामोऽन्वितो वृष्णिकुलैर्महाबलैः ॥१८॥

भीष्मात्मजा मन्दिरमध्यगा वरा-
रोहा हरेरागमनं समीक्षती ।
प्रत्यागमं तस्य कवेरपश्यती
भयाकुलाचिन्तयदात्मना तदा ॥१९॥

अहो त्रियामान्तरितो विवाहो
मे मन्दविध्याः कमलायताक्षः ।
नागच्छतीशोऽनलसो दयालुः
कृष्णो रमेशोऽत्र न वेद्मि हेतुम् ॥२०॥

आदौ न प्रस्थापितवान् द्विजोत्तमं
कृतोद्यमत्वादनवद्यविग्रहः ।
प्रस्थानकाले तु जुगुप्सितं मयि
मत्वा कियत्तं प्रतिदिष्टवान् विभुः ॥२१॥

अतो हि सन्देशहरो मम द्विजो
नावर्ततेऽद्याप्यथवा ततो हरिः ।
विनिर्गतो मत्करपीडनाय सो
मद्भाग्यवैमुख्यतयानुरोधितः ॥२२॥

हा दुर्भगाया मम नानुकूलो
धाता महेशोऽथ शिवाद्रिकन्या ।
देवी सती वा विमुखा सगौरी-
त्थं चिन्तयन्ती विकलास भैष्मी ॥२३॥

श्रीकृष्णपादाम्बुजलीनचित्ता
कृष्णेन पत्या हृतमानसाब्जा ।
विवाहघस्रे निजनाथदैव-
मपश्यती त्यक्तुमसूंस्थितास ॥२४॥

वारिच्युतार्भा शफरीव दुःखिता
भीष्मात्मजा त्रासविकम्पिताङ्गका ।
जितासना त्यक्तुमसून्न साशकद्
द्वारावतीशागमनस्य चिन्तया ॥२५॥

तस्यास्तदासूंस्तु रुरोध कृष्ण-
ध्यानं बलात् मानसवारिजान्तः ।
मुखस्थिता कृष्ण दयानिधे पते
नाथेति नाम्ना[म]वली ररक्ष ॥२६॥

गोविन्दचित्ताश्रुजलाकुलाक्षी
पत्युर्हरेरागमनस्य चाद्य ।
कालोऽस्ति चित्ते हि विचार्य किञ्चि-
दाश्वस्तचित्तास विदर्भजा सा ॥२७॥

प्रतीक्षती सागमनं यदा हरे-
र्न्यमील्य नेत्रेऽश्रुकलाकुले तदा ।
वामाक्षिवामोरुभुजौ च प्रास्फुरन्
भीष्मात्मजायाः प्रियसूचकाः समम् ॥२८॥

प्राप्तेन कृष्णेन पुरोपवेशं
प्रेम्णा विनिर्दिष्टतरो द्विजाग्र्यः ।
स एव भैष्मीं निजगेहमध्यगां
ददर्श देवीं हरिपादलीनाम् ॥२९॥

सा तं प्रहृष्टवदनं द्विजवर्यमारा-
दव्यग्रदेहगतिमात्मचरं विलोक्य ।
तल्लक्षणज्ञा समपृच्छदाशु
द्वारावतीशागमनं मुदा वै ।।३०।।

आवेदयत्प्राप्तमजेशशेषसद्
दैवं हृदीशं यदुनन्दनं तदा ।
तस्यै स्वयं ह्यानयनं हरेर्द्विजः
शशंस सत्यं वचनं ह्युपांशुतः ।।३१।।

कृष्णस्य वाक्यं च शशंस सत्यं
तामानयिष्येऽहमिति द्विजाग्र्यः ।
श्रुत्वागतं प्राणपतिं रमेशं
प्रसन्नचिता प्रणनाम तं द्विजम् ।।३२।।

सर्वस्वदानं समतां न गच्छेत्
कृष्णप्रदायेति विचार्य चित्ते ।
ननाम सादौ प्रददौ च पश्चा-
दष्टर्द्धियुक्तं नवशेवधिं च ।।३३।।

ये मां श्रियं वै प्रणमन्ति लोके
ते सर्वसम्पन्निलया भवन्ति ।
श्रियां नतायां मयि किं पुनर्हि
तस्मै ननामान्यमपश्यतीष्टम् ।।३४।।

अष्टर्द्ध्युदर्कं समवाप्य विप्रो-
ऽनुमोद्य भैष्मीं प्रजगाम गेहं ।
तदैव साभूत् परमप्रमोद-
युक्ता विदर्भेशसुताप्यनाथम् ।।३५।।

प्रसन्नचित्तास्यसरोरुहा सा
प्राणेश्वरास्यस्य विलोकनार्थम् ।
समारुहत्सौधशिखं सखीभि-
स्त्यक्त्वा त्रपां लोकजनस्य मोदात् ।३६॥

तदैव तस्याः परमप्रमोदा-
च्छङ्गा बभूवुर्दलिताः प्रकोष्ठे ।
मुक्ताफलं घ्राणगतं ससार
स्तनांशुकाबन्धनरज्जुभेदः ॥३७॥

ददर्श कृष्णं विनतासुतध्वज-
रथस्थितं नीरदनीलविग्रहम् ।
सौदामिनीवस्त्रयुगावृतं स्मर-
मनोहरं भूषणभूषणाङ्गकम् ॥३८॥

सद्रत्नस्वर्णमुकुटं गलशोभिरत्नं
सत्कर्णवेष्टनसुनालकचावलीभिः ।
भ्राजत्कपोलरुचिरं जलजायताक्षं
कुन्दाग्रदन्तमरुणाधरमुन्नसं तम् ॥३९॥

काञ्च्यङ्गुलीयकरभूषणनूपुराढ्यं
केयूरभूषितभुजं वनमालयाढ्यम् ।
आजानुबाहुमरिशङ्खगदाब्ययुक्तं
लोकैकसुन्दरमनङ्गविमोहनाङ्गम् ॥४०॥

आराद्ददर्श तमहो सखिभिर्विदर्भ-
राजेन्द्रजाद्रिशिखरेष्वधिरुह्य हृष्टा ।
चन्द्रं नवीनमिव चेटिगणैः समन्तात्
सम्प्रोच्यमानमखिलप्रमदप्रदं सा ॥४१॥

कृष्णं मनोहरसुनीलघनं निरीक्ष्य
तापं जहौ विरहजं लघु रुक्मिणी सा ।
सुस्वागतं कृतवती हृदये निधाय
नेत्रेण तं निज पतिं हि मुमोच शोकम् ॥४२॥

सा प्रत्यनन्दन्निजनाथदैवा-
गमोत्सवे भीष्मसुता प्रमोदात् ।
तापेन खिन्नः शिखिनां गणो प्राक् (द्राक्)
मेघागमे तापहरे यथा वै ॥४३॥

रङ्को यथा शेवधिमाप्य हृष्टो
भवेद्धृषीशं च यथासुमाप्य ।
प्रोष्ठीव सम्प्राप्य जलं यथाल्प-
धान्यं च तद्वत्सुखमाप भैष्मी ॥४४॥

अन्नातुरोऽन्नं समवाप्य यद्वत्
तप्तो गजो गाङ्गजलं यथा वै ।
रोगी सुधां मृत्युजरागदापहां
यथाप्य तद्वद्धरिमाप्य भैष्मी ॥४५॥

निमेषहीनैर्नयनैर्निजेश-
कृष्णं चिदानन्दतनुं समन्तात् ।
विलोकयन्ती न च तृप्तिमाप
भैष्मी चकोरीव विधुं विदूरात् ॥४६॥

तामाह माता शृणु पुत्रि तेऽद्य
जाता प्रतिज्ञा त्वमतोऽनयं मे ।
क्षमस्व नीराजनतां व्रजेऽहं
तवातुले कृष्णपदाब्जचित्ते ॥४७॥

जाता सुतेत्युत्तमभाग्यतो नः
पूतं कुलं ते जनितो यतोऽद्य ।
शेषेशब्रह्मेन्द्रसुरोत्तमैर्हृदि
ध्येयाङ्घ्रिपद्मं ह्यवलोकयेऽहम् ।।४८।।

।। इति श्रीकान्हजीभट्टात्मजबालमुकुन्दभट्टविरचिते
रुक्मिणीमङ्गलाख्ये काव्ये नवमः सर्गः ।।

## ॥ दशमः सर्गः ॥

—:०:—

भेरीमृदङ्गपटहानककांस्यशङ्ख-
वेण्वादिरावमधिकं (हि निशम्य दूरात् ।
कोऽयं समागत इति क्षितिपा भयेन
जिज्ञासयास्य जुजुयुश्चरमेव सर्वे)[1] ।।१।।

द्वारावतीपतिमुपागतमात्मचारैः
श्रुत्वैव ते नृपतयो भयभीतचित्ताः ।
ते रुक्मिणं ययुररं बलवीर्ययुक्तं
नागाः यथा कुहरमाश्ववलोक्य वीशम्[2] ।।२।

ते रुक्मिणं जगदुराशु शृणु त्वमीश
तौ वैरिणौ हरिबलौ समुपागतौ वं ।
सैन्यैःसमं यदुचितं कुरु तत्त्वमादौ
पश्चाद्यथा नहि भवेदशुभं विवाहे ।।३।।

---

१. "क्षितिपाःनिशम्य ।। कोऽयं स्वनेन भयमाशु ददन्नुपेत इत्याकुलाश्चरमरं जुजुयुर्भयेन ।।" इत्यंशः पत्रप्रान्ते प्रथमश्लोकस्य कोष्ठकगतांशस्य कृते विद्यते ।

२. द्वितीयश्लोकस्य कोष्ठकान्तर्गतस्यांशस्य कृते "वीशं विलोक्य भुजगा विवरं यथा वै ।।" इत्यपि पाठः ।

श्रुत्वा वचस्तानवदत्क्षितीशकान्
रुक्मी विवाहः स्वसुरस्ति मद्गृहे ।
समागतौ रामहरी स्ववाहिनी-
युक्तौ विवाहोत्सवप्रेक्षणोत्सुकौ ।।४।।

तस्माद्विरोधं नहि कर्तुमत्र
युक्तं ह्युपेक्षां तु करोम्यहं तयोः ।
एवं ब्रुवन्तं तनयं विदर्भ-
राजोऽब्रवीन्नीतियुतं वचो बुधः ।।५।।

गृहागतस्यातिरिपोरुपेक्षा
कार्या न तस्मादहमेतयोर्वै ।
पूजां करिष्यामि ससैन्ययोर्हि
स्यान्नैव विघ्नं दुहितुर्विवाहे ।।६।।

इत्थं वदित्वा तनयस्य चाग्रे
चित्ते विचार्येति मदीयकन्याम् ।
उद्वोढुमेव ध्रुवमत्र कृष्णः
समागतो रामयुतो बलाढ्यः ।।७।।

तस्मादहं यादवसैन्यसंयुतं
कृष्णं सरामं विधिनादरेण ।
सम्पूजयिष्यामि विरोचितेने-
त्थं वै विदर्भो मनसा महामतिः ।।८।।

प्राप्तौ च श्रुत्वा दुहितुर्विवाहे-
क्षणोत्सुको भीष्मनृपोऽभ्यगात्तौ ।
समर्हणैस्तूर्यरवेण राम -
कृष्णौ द्विजैर्मङ्गलवाचकैश्च ।।९।।

वासांसि दिव्यानि विभूषणानि
रत्नानि स्वर्णं मधुपर्कमग्रे ।
गजान्रथान्स्तुरगान्सुवर्णा-
ञ्चितानुपानीय समर्चयत्तौ ।।१०।।

निवेशनं श्रीमदथोपकल्प्य
ससैन्ययोः सानुगयोर्यथावत् ।
आतिथ्यमर्घ्यं विदधे महर्द्धी-
र्भीष्मस्तु रामाच्युतयोर्मुदा वै ।।११।।

जीमूतश्यामलाङ्गं सरसिजनयनं कीरनासं सुभालं
बिम्बोष्ठं कम्बुकण्ठं मृदुकरचरणं दीर्घकर्णांसबाहुम् ।
सुभ्रूं कुन्दाग्रदन्तं ह्यमलविधुमुखं दीर्घवत्सं सुजानुं
कृष्णं सच्चित्सुखाङ्गं मदनमदहरं भूषणाभूषणाङ्गम् ।।१२।।

विद्युद्वासं दधानं मणिमयमुकुटं मूर्ध्नि कण्ठे च रत्नं
मालां स्वां वैजयन्तीं मलयजतिलकं भालदेशे सुपीतं ।
बाह्वोः केयूरमङ्ज्योः मणिमयकटके नूपुरे मेखलां वै
कट्यां हस्ते विचित्रं सुकनकवलयं कृष्णमैक्षत्क्षितीशः ।।१३।।

दृष्ट्वा भीष्मो रमेशं त्रिभुवनसुषमैकालयं वेदमूर्द्ध-
रत्नैर्नीराजिताङ्घ्रिं शिवविधिसनकध्येयपादं यदूनाम् ।
मध्ये संराजमानं परमसुखनिधिं नाकशतस्य शोभां
सर्वां द्रष्टुं च वक्तुं लयममृतनिधौ प्राप मुञ्चन् दृशापः ।।१४।।

रुक्मिण्याः स्वीयपुत्र्याः सकलगुणगणैस्तुल्यमानन्दमूर्तिं
कृष्णं मेने पतिं सस्त्रिभुवनवनितासुन्दरीं तां च तुल्याम् ।
कृष्णस्यैवेष्टभार्या नहि पुनरमरी तामृते तस्य तस्याः
कान्तो नान्योऽपि देवोऽर्हति भवितुमतोऽसौ तु गृह्णातु भैष्मीम् ।।१५।।

लोकेशः श्रीपतिर्मे व्रतवृषनतिभिर्दानविप्रार्चनाद्यै-
स्तुष्टश्चेत्तेन कृष्णस्त्रिभुवनकमनीयोऽद्य गृह्णातु पाणिम् ।
भैष्म्याः पद्मालयायाः नहि चिदितनयः श्वा यथा शक्रभागं
ध्यायन्नेवं हि भीष्मः पुनरगमदसौ स्वौकप्रं(?सा)पूज्य कृष्णम् ॥१६।

आज्ञाय कृष्णं समुपागतं वरं
विदर्भराजेन्द्रपुरोकसो जनाः ।
आगत्य नेत्राञ्जलिभिः पपुः भरं
तदास्यपूर्णेन्दुसुधां मनोहराम् ॥१७॥

निमेषशून्यैर्नयनालिभिस्ते
कृष्णास्यपद्मामृतमापिबन्तः ।
न तृप्तिमीयुर्न च गेहकृत्यं
स्मरेयुरानन्दसमुद्रलीनाः ॥१८॥

भृङ्गा यथा कल्परुहं प्रफुल्लं
सम्प्राप्य नैवान्यमहीरुहं वै ।
ईयुस्तथा कृष्णमुखाब्जमाप्य
नेत्राणि पश्येयुरभीष्टमन्यम् ॥१९॥

किं नो भाग्यसुरद्रुमाद्यकुसुमप्राकट्यमेषोऽस्ति किं
संसारान्धतमोरिपुः शुभमणिज्वालाङ्कुरः किं वपुः ।
वेदानां परमेश्वरं निगदतां प्रामाण्यमाप्तं हि किं
पूर्णानन्दसमुद्रजन्मवसुधा किं जन्मसाफल्यभूः ॥२०॥

किं कामोऽङ्गयुतोऽद्भुतः किमथवा शोभालयः किं फलं
दृष्टेः किं[1]द्विजदेवधेनुजलधेराह्लाददेन्दुर्ह्ययम् ।
आत्मा किं निखिलात्मनां प्रकटतां जातोऽद्य भाग्येन वा
भूभारासुरराजकाननदवः किं नो सुमोदप्रदः ॥२१॥

---

१. 'किञ्चिद्' इति मातृकापाठः अधिकवर्णयुतः ।

कामोऽसौ यदि किं न देहविकलश्चन्द्रो यदासौ न किं
रोगी नो यदि किं न तीव्रकिरणो वह्निर्यदातापकृत् ।
किं नासीद्घनवारिदश्चपलया युक्तो यदा किं जडो
ज्ञातं द्वारवतीपतिर्हि सुषमाधिष्ण्योऽस्ति कृष्णोऽरिहा ।।२२।।

अस्यैव भार्या भवितुं विदर्भ-
राजेन्द्रजैवार्हति नापरा वै ।
भर्तायमेवोचित एव भैष्म्या
एवेति सर्वे जगदुर्वचस्ते ।।२३।।

यत्किञ्चिदस्मत्सुकृतं तु तेन
तुष्टस्त्रिलोकेशपतिर्विधाता ।
सोऽद्यानुगृह्णात्विति कृष्णचन्द्रो
गृह्णातु गृह्णातु करं हि भैष्म्याः ।।२४।।

एवं वदन्तिस्म पुरोकसस्ते
स्नेहानुबद्धानयनं मनश्च ।
निधाय कृष्णास्यसुधामरीचा -
वानन्दिता विस्मृतलोककृत्याः ।।२५।।

राज्ञी सकन्या ससखी स्वसौध-
जालङ्गता कृष्णमुखाब्जमारात् ।
पपौ सुनेत्राञ्जलिभिर्निमेष -
हीनैर्हृदालिङ्ग्य तदाङ्घ्रिपद्मम् ।।२६।।

उवाच राज्ञी स्खलिताक्षरा सखीं
देवर्षिणा यद्वचनं पुरोदितम् ।
तदेव सत्यं हि भविष्यति ध्रुवं
द्वारावतीं यास्यति मत्सुता मुदा ।।२७।।

सुता समा द्वारवतीश्वरेण
भैष्म्या समो द्वारवतीश्वरोऽतः ।
एनां हरेदद्रिसुतागृहेऽसा -
वद्यैवमोदं प्रददन्भृशं नः ।।२८।।

धन्या जनाः द्वारवतीनिवासिनः
नित्यं चिदानन्दतनुं विधीशपम् ।
पश्यन्ति ये कृष्णमशेषदेवता
सेव्यारविन्दाङ्घ्रिनखेन्दुदीधितम् ।।२९।।

इति ब्रुवाणां जननीमुवाच
रुक्म्यङ्गणस्थोऽम्ब समर्चनाय ।
हिमाद्रिपुत्र्याः वनिताभिरादौ
सम्प्रेषयारं भगिनीमिदानीम् ।।३०।।

सम्पूजयि[१]त्वाद्रिसुतां यदा सा -
गच्छेत्तदास्यास्तु विवाहकर्म ।
भवेदिदानीं समयोऽर्चनस्य
तथा विवाहस्य समागतोऽम्ब ।।३१।।

तामाह मातादिसुतासमर्चनो-
द्यता स्थिता ते भगिनी पुरैव ।
श्रुत्वा वचो मातुररं समागतः
सभामथाहात्मबलाधिपं प्रियम् ।।३२।।

संव्यूह्य सेनां सुसमर्थवाहन -
भटां त्वमातिष्ठ विदर्भजां वने ।
द्वारावतीशो सहजां यथा दृशा
पश्येन्न यान्तीं मगजार्चनाय वै ।।३३।।

---

१. भूमिकायां कृदन्तप्रयोगप्रसङ्गो द्रष्टव्यः ।

तं रुक्मिणं मागध आह राजन्
भैष्मीं हृतामेवमवेहि मार्गे ।
कृष्णेन तस्माद्गृहमध्यगैवा -
म्बापूजनं सा तु करोतु सौख्यात् ॥३४॥

इत्थं ब्रुवन्तं मगधेश्वरं बली
रुक्मी जगाद स्वकुलस्य पद्धतिम् ।
विनाद्रिजा पूजनमुद्वहेच्चिरात्
कन्याभवेद्वै विधवा सुदुःखिता ॥३५॥

दुर्गार्चनादाशु सुतान्विता धना -
न्विता सुभाग्या सुखिता सदास्ति ।
तन्मां[1] भवान् (तस्माद्भवान्) प्रापिबलेन संयुतः
रक्षाद्य भैष्मीं पशुपालकेन वै ॥३६॥

शाल्वस्तथा दन्तमुखस्तथान्ये
महीभृतः स्वस्वबलेन युक्ताः ।
रक्षन्तु भैष्मीमसहोदराढ्यां
तिष्ठामि गेहे जवकानुजाढ्यः ॥३७॥

कृष्णोऽपि सर्वैर्यदुभिः सरामः
ततोऽद्रिकन्योपवनं जगाम ।
हर्तुं विदर्भेशसुतां श्रियं वै
ज्वालां यथा वायुसखेस्तृणेभ्यः ॥३८॥

---

१. "मा" इति शब्दो रुक्मिण्याः साक्षाल्लक्ष्म्याः विशेषणत्वेनात्र प्रयुक्तः । "मा" इत्यस्य शब्दकल्पद्रुमे लक्ष्मीरित्यर्थः "मा पतिर्विष्णुः । प्रकृतकाव्येऽपि अन्यत्र" भारतीं माम् (२।२) ।" यद्येवं स्वीक्रियेत चेत्तदपि रुक्मिणो-मुखान्नेदमुपयुज्यते, अतः 'तस्माद्भवान्' एव तत्र उचिततरः इति मतम् ।

भैष्मीं प्रतीक्ष्यन्[1] सरणौ शरण्य-
स्ताक्ष्यंध्वजालङ्कृतस्यन्दनस्थः ।
तस्थौ रमेशो वरशार्ङ्गपाणिः
सुशोभयन् मण्डलमिन्दुवत्सः ।।३९।।

अम्बार्चनस्यैव मिषेण गन्तुं
कृष्णेन सार्द्धं नगरीं तदीयाम् ।
समुत्सुकां तत्र सुतामवेत्य
राज्ञी समालिङ्गदर भुजाभ्याम् ।।४०।।[2]

आसिञ्चती स्नेहजलेन तच्छिखां
मुहुर्गृणन्त्यम्ब सुते ममानयम् ।
क्षमस्व यस्मान्न मया त्वदीयकं
कृत्यं कृतं दीनतरा ततोऽस्म्यहम् ।।४१।।

एवं रुदन्ती[3] विकला वियोग-
दुःखातदेहेन्द्रियहृद्भुजान्तरे ।
आलिङ्ग्य पुत्रीं नयनाश्रुधारया
स्नेहेन चासिञ्च्य जगाद रागतः ।।४२।।

त्वामव्यान्नृहरिः स्वभृत्यभयहा मार्गे सदेन्द्रारिहा
शान्ता दिग्विदिशश्च तेऽद्य तनये स्युः सानुकूलाः शिवा ।
शम्भुश्चैकरदः षडाननमुखा देवाः सह स्वामिना
गच्छन्त्या[4]द्रिसुतागृहाद्यदुपुरीमित्याह भैष्मीं प्रसूः ।।४३।।

---

१. भूमिकायां "कृदन्त प्रयोगः" दर्शनीयः ।

२. श्लोकस्यास्य पूर्वमयमंशः प्राप्तः—
(अम्बार्चनायोद्यतमानसीं तामम्बा समालिङ्ग्य सुतां भुजाभ्याम् ।। आसिञ्च)

३. भूमिकायां स्त्रीप्रत्ययप्रयोगप्रसङ्गोऽवलोकनीयः ।

४. सन्धिप्रयोगप्रसङ्गे विवेचितम् ।

मन्त्रोदकैस्तामभि[षि]च्य माता-
अश्रुपूर्णनेत्रां परिरभ्य पुत्रीम् ।
पुनः पुनः प्रेमजवाकुलाक्षी
समादिश[1]दद्रिसुतार्चने वै ॥४४॥

भैष्मी समालिङ्ग्य निजां प्रसूं सखीं
तातं तथान्यान् सुहृदोऽनुरागतः ।
अन्तःपुराद्वीरवरैर्वरायुधै-
र्गुप्ता जगामाद्रिसुतार्चनाय सा ॥४५॥

द्रष्टुं देव्याः शिवायाश्चरणजलरुहं निर्ययौ कञ्जपद्भ्यां
स्वान्तेऽनुध्यायती स्वप्रियतमचरणाब्जं यतोक्तिर्यतासुः ।
साद्धं सा मातृभिः स्वप्रियसखिसुवृता रक्षिता राजपुम्भिः
शूरैः सज्जैर्धृतास्त्रैस्त्रिदिवपतिभिरारात्सुधेवेन्द्रगेहे ॥४६॥

भेरीमृदङ्गानकशङ्खदुन्दुभि-
वंशादयो नेदुरतीव हृत्प्रियम् ।
नानोपहारैर्गणिकोत्तमा ययुः
सहस्रसोऽग्रे [2]दुहितुर्नृपस्य वै ॥४७॥

स्रग्गन्धवस्त्राभरणैः स्वलङ्कृता
विप्राङ्गना जग्मु वधूमनूत्सवे ।
गायन्त्य ईशं च सुवाद्यवादका-
स्ते गायकाः मागधसूतवन्दिनः ॥४८॥

---

१. "समादिशदद्रि" इत्यत्र "श" वर्णो गुरुःस्यात् ।

२. "दुहितुर्नृपस्य वै, इत्यस्य कृते पत्रप्रान्ते "वररत्नभूषिता" इति पाठोऽपि विद्यते ।

आवृत्य कन्यां ययुरम्बिकालयं
गायन्त ईशं च शिवां सुतान्विताम् ।
स्तुवन्त इष्टार्थदपादपङ्कजौ
कृष्णाङ्घ्रिपद्मानुरतौ महेश्वरौ ।।४९।।

आसाद्य देव्याः सदनं विदर्भजा
धौताङ्घ्रिहस्ताब्जतलोपस्पृश्य[1] वाः ।
शान्ता शुचिस्सा प्रविवेश चाम्बिका-
न्तिकं हृदीशं ह्यनुचिन्तयन्त्यहो ।।५०।।

वृद्धा विधिज्ञा द्विजवर्ययोषित-
स्तां वन्दयांश्चक्रुरुमां भवान्विताम् ।
प्रणम्य मूर्ध्नार्चय भैष्मि मङ्गलां
दाम्पत्यदामिष्टवरप्रदां शुभाम् ।।५१।।

विप्राङ्गनानां वचनं निशम्य सा
ननाम मूर्ध्नागसुतां विदर्भजा ।
अभीक्ष्णमम्ब स्वसुतान्वितां शिवां
त्वां वै नमस्ये हि हृदुक्तिर्विग्रहैः ।।५२।।

भूयात्पतिर्मे भगवांस्तु कृष्णो-
ऽनुमोदतां तद्भवती भवान्विता ।
स चाप्तकामः स्वरतिर्हृदीश्वरः
सच्चित्तनुर्वै भवतो प्रसादतः ।।५३।।

अद्भिश्च गन्धाक्षतधूपवासः
सृङ्माल्य रोचिष्णुभिरर्चयच्छिवाम् ।
नानौपहारैर्बलिभिः प्रदीप-
राजीभिरग्रे सुपृथक् पृथग्वधूः ।।५४।।

गौरी प्रहस्याह निजात्मदेवतां
बिडम्बयन्तीमबलात्मतां क्षितौ ।
अद्यैव कृष्णेन निजेश्वरेण ते
सङ्गोऽस्तु मार्गे कमलेऽद्य रुक्मिणि ॥५५॥

कृष्णोऽखिलेशोऽद्य समागतोऽयने
त्वदेकचित्तो यदुसैन्यसंयुतः ।
गच्छाशु कृष्णेन समं यदोः पुरीं
ज्योत्स्नेव चन्द्रेण समं हृता प्रगे ॥५६॥

श्रुत्वैव गौर्याः वचनं प्रणम्य तां
विप्राङ्गनाः साथ सतोः समर्चयत् ।
फलेक्षुताम्बूलसुगन्धपूपैः
सुकण्ठसूत्रैर्लवणेक्षुभिर्वधूः ॥५७॥

तस्यै स्त्रियस्ताः प्रददुर्हिशेषा-
मथाशिषः संयुयु[जु]ः प्रमोदात् ।
ताभ्यो नमस्कृत्य वधूः प्रसादं
जग्राह गन्तुञ्च समुत्सुकाभवत् ॥५८॥

त्यक्त्वाथ मौनव्रतमम्बिकालया-
द्विनिर्जगामाथ सखीकरं वधूः ।
रत्नाङ्गुलीयोपविभूषितेन सा
प्रगृह्य हस्तेन हरीप्ससाब्जजा ॥५९॥

विभ्राजच्चञ्चलाङ्गीं कमलमृदुतनुं चित्रदिव्याम्बराढ्यां
श्यामां तां देवमायामिव सुसुषमया मोहिनीं जित्वराणाम् ।
संराजत्कुण्डलालङ्कृतविधुवदनीं कुन्तलाशङ्कितेण-
दीर्घाक्षीं सन्नितम्बार्पितमणिरशनां सुस्मितामुच्चनासाम् ॥६०॥

सद्बिम्बोष्ठाधराभारुणरदविर्तात व्यञ्जदग्रस्तनीं तां
सिञ्जन्मञ्जीरशोभायुतपदजलजेनाचलन्तीं शनैर्हि ।
मार्गे दृष्ट्वाग्र्यवीरा मुमुहुरतितरां तत्कृतानङ्गवेगा-
क्रान्ता भूपाःविचेतास्तरव इव बभूवुस्तदा कीर्तिमन्तः ।।६१।।

भूपाः सव्रीडहासेक्षणहृतहृदयाः राजहंसायतीं तां
दृष्ट्वा पेतुर्विमूढा गजरथहयगा भूतलेऽथोज्झितास्त्राः ।
रम्भा[ऽ]तीव्रानिलार्ता इव निजपतये कृष्णचन्द्राय शोभां
दिव्यां स्वामर्पयन्तीं कलगमनमिषेणाब्जजां भीष्मपुत्रीम् ।।६२।।

तल्लावण्यविमोहनास्त्रमथितस्वान्तान्नृपान् वाहनान्
भूमौ सम्पतितान् स्मराजगरसंग्रस्तान् गतास्त्रान् स्त्रियः ।
दृष्ट्वोचुर्यदुनाथदोहदवतीं भैष्मीं प्रतीदं प्रिये
पश्यैनं गरुणध्वजाङ्कितरथारूढं स्वकीयं पतिम् ।।६३।।

सर्वे मागधशाल्वकप्रभृतयस्त्वद्रक्षका ये नृपा
मूढा वाहनतः क्षितौ निपतितास्तेऽपाङ्गबाणार्दिताः ।
त्यक्तास्त्रा विकलेन्द्रियास्त्वमधुना कृष्णेन पत्या समं
याहि द्वारवतीं पुरीं सुखमहो भीष्मात्मजे प्राणदे ।।६४।।

श्रुत्वा वाक्यमतीव रम्यममृतप्रख्यं सखीनां महा-
नन्दं प्राप्य विदर्भराजदुहिता नम्याह ता मौलिना ।
युष्माभिस्तु विलोकितो मम पतिर्हर्तुं ह्युपेतोऽद्य मां
यातां द्वारवतीं पुरीं वदत मत्तातं च गत्वा गृहम् ।।६५।।

मन्दं मन्दं हि भैष्मी चलजलजपदो चालयत्यात्मभर्त्तः
कृष्णस्यानन्दमूर्तेः परमभगवतः प्राप्तिमन्वेषमाणा ।
केशानुत्सार्य वामैररुणकररुहैरैक्षतापाङ्गतस्तान्
भूपान् प्राप्तान् ह्रियासादितनिजहरणार्थोद्यतं तं ददर्श ।।६६।।

दृष्ट्वानन्दघनं निजेशमनघं कृष्णं यदूनां पतिं
वेगात्तं प्रययौ सखीगणमरं त्यक्त्वा विदर्भेशजा ।
गङ्गावज्जलधिं समुद्रतनया विष्णुं यथा पूरुषं
शक्तिः प्राणमिवेन्द्रियं गिरिसुता शम्भुं तथा प्रेमतः ॥६७॥

तां भैष्मीं कमलामुरः कृतगृहां स्वस्यन्दनारोहण-
मिच्छन्तीं स जहार यादवपतिः कृष्णो द्विषामीक्षताम् ।
वर्षत्सु त्रिदिवाधिपेषु सुमनो वाद्यानि वाद्यत्सु च
कुर्वत्स्वाशु नमो जयेति वचनं ताक्ष्यो यथा वै सुधाम् ॥६८॥

दिव्ये तार्क्ष्यविभूषिते हयवरैर्युक्ते समीराशुगैः
कृष्णश्चक्रिणि रुक्मिणीं निजवधूमारोप्य लक्ष्मीं विभुः ।
भूपांस्तान् परिभूय फेरबकुलार्तिंसहो यथा भागहृद्
रामाद्यैर्यदुभिः ययौ सुशनकैः शङ्खादिकान् वादयन् ॥६९॥

धात्र्यश्चालिकुलं विलोक्य सुषमाधिष्ण्यं हिं कृष्णं तदा
नैवात्मानमलं विदुः सुखनिधौ लीनाथ[1] दृष्ट्वा हृताम् ।
भैष्मीमात्मधवेन साध्विति वचः प्रोचुर्द्विजाश्चाशिषो
देवाःस्वर्गगताः जयेति कुसुमप्रक्षेपणं चक्रिरे ॥७०॥

॥ इति श्रीद्राविडकान्हजीभट्टात्मजबालमुकुन्दभट्टविरचिते
रुक्मिणीमङ्गलाख्ये काव्ये दशमः सर्गः ॥१०॥

१. भूमिकायां सन्धिप्रयोगप्रसङ्गो ध्यातव्यः ।

## ॥ एकादशः सर्गः ॥

—:o:—

ततः समूचुर्वनिताः समन्ताद्-
भैष्मी हृता द्वारवतीश्वरेण ।
कृष्णेन ताक्ष्र्येण सुधेव युष्मान्
धिग्रक्षकान् मागधशाल्वकादीन् ॥१॥

श्रुत्वा विदर्भेशसुतां हृतां तदा
लोकाः परां प्रीतिमवापुरात्मनः ।
भीष्मो सदारः ससुहृत्पुरोहितो
मेने ततः पूर्णमनोरथं भृशम् ॥२॥

नैव स्वाभिभवं यशः क्षयकरं तं मानिनः सेहिरे
भूपाः शाल्वजरासुतप्रभृतयो बुद्ध्वा सखीनां रवैः ।
अस्मान् धिग् धिगहो यतः क्षितिभृतामात्तायुधानां यशो
गोपैरद्य हृतं मृगैरिव मृगेन्द्राणां बलिं पश्यताम् ॥३॥

एवं ते प्रवदन्त एव कृतसन्नाहा महाक्रोधसं-
विष्टा वाहनमाशुभूमिपतयः स्वं स्वं समारुह्य वै ।
स्वैः स्वैर्घोरबलैर्गजाश्वरथपत्तीनां धृतेष्वासका
आधावन्नखिलेश्वरं यदुपतिं वह्निं पतङ्गा यथा ॥४॥

आलोक्य तानापततो हि यादवा-
नीकाधिपास्तस्थुररं तदुन्मुखाः ।
टङ्कारयित्वा स्वधनूंषि दंशिताः
पुच्छान् समुद्यम्य यथा मृगेन्द्रकाः ॥५॥

नाराचवर्षाणि ववर्षु वेगा-
द्रथाश्वदन्ता बलसैन्यकेषु ।
ते कोविदा नामभिराक्षिपन्तो
मेघा यथापोह्य चलेषु तेषु ॥६॥

पत्युर्बलं वीक्ष्य पृषत्कधारया-
ऽछन्नं विदर्भेशसुता सुमध्यमा ।
सव्रीडमैक्षद्भयविह्वलेक्षणा
सद्वक्त्रचन्द्रं निखिलव्यथापहम् ॥७॥

प्रहस्य तानाह जनार्दनस्तदा
मा भैः स्म वामाक्षि बलं हि शात्रवम् ।
एतद्विनक्ष्यत्यधुनैव तावकै-
र्यदुप्रवीरैस्तृणवद्धुताशनैः ॥८॥

तद्विक्रमं शत्रुगणस्य वीक्ष्य
वीरागदाक्रूरबलादयस्तदा ।
अमृष्यमाणा रथवाजिहस्तीन्
प्रक्ष्वेडनैर्जघ्नुरलं पदातीन् ॥९॥

शिरांसि पेतुर्गजिनां तुरङ्गिणां
शताङ्गिनां पत्तिगणस्य कोटिशः ।
सकुण्डलश्रोत्रविभूषणानि स-
दुष्णीषयुक्तानि शरैश्छतानिव ॥१०॥

गजाश्वनागाश्वतरा निपेतुः
खरा मनुष्याः शरभिन्नमस्तकाः ।
हस्ताः सखड्गाः सगदाः सकार्मुकाः
ऊर्वङ्घ्रिजङ्घाः करभाश्च भूभृताम् ॥११॥

सञ्छिद्यमानारिशरीरपर्वता-
दनेकशोऽरं रुधिरापगा मृधे ।
प्रवर्तिता बाहुसरीसृपाः नरो-
त्तमाङ्गकूर्मा नरकेशशैवलाः ।।१२।।

हताश्वनक्रा हतहस्तिमध्यम-
स्तटाः करोर्वण्डजसङ्कुलास्तदा ।
धनुस्तरङ्गाः परशस्त्रगुल्मकाः
चर्मभ्रमाः भूषणशर्करावती ।।१३।।

मनस्विनां सम्मददाश्च भीरु-
भयप्रदाः रामगदादिभिर्हि ।
निघ्नद्भिराजौ मुसलेषुखड्गैः
सुदुर्मदान् शत्रुगणान् समन्तात् ।।१४।।

अनन्तपारं तदनीकनीशतं
समुद्रवद्दुर्गममाभयङ्करम् ।
सुपालितं चेदिपशाल्वमागधा-
दिभिः प्रणीतं क्षयमाशु यादवैः ।।१५।।

संहन्यमाने ध्वजिनीशते जरा
सुतादयो वै विमुखा ययुर्नृपाः ।
रामादिभिर्यादवयूथपैर्गजा
यथा मृगेन्द्रैर्जयकाशिभिर्मृधे ।।१६।।

कृष्णान्वितैर्वृष्णिगणैर्महाबलै-
र्वीरैः समन्ताज्जयकाशिभिर्मृधे ।
कुर्वद्भिः शङ्खानकदुन्दुभिस्वन-
मुपेक्षिता केसरिभिः शिवा यथा ।।१७।।

चैद्यं समभ्येत्य गतोत्सवं नृपा
नष्टत्विषं शुष्कमुखं महातुरम् ।
हृताबलातुल्यमवाङ्मुखं महा-
दुःखार्णवे सम्पतितं समूचुः ।।१८।।

मन्त्रौषधीरुद्धमुखं महाविष-
वैद्येन मौलिस्थगृहीतरत्नम् ।
मुहुः श्वसन्तं प्रतिघान्वितं महा-
व्यालं यथा तार्क्ष्यपराजितोरगाः ।।१९।।

भो भो नृशार्दूल चिदीशनन्दन
त्वं दौर्मनस्यं त्यज चैतदात्मनः ।
राजन् यतो देहिषु न प्रियाप्रिय-
निष्ठा स्वदिष्टस्य वशेषु दृश्यते ।।२०।।

योषिद्यथा दारुमयीह नृत्यते
सदेच्छया नर्तयितुः क्षितीश्वर ।
एवं जनोऽयं सुखदुःखयोः परा-
धीनः परेशस्य समीहते भृशम् ।।२१।।

पराजितः सप्तदशाहमाहवान्
सैन्यैस्त्रयोविंशतिभिर्जरासुतः ।
कृष्णात्परं त्वेकमनीकमन्तिमं
सौरेः स रामाज्जितवान् बलैर्युतः ।।२२।।

ततो गतोऽसौ ममभीतितः पुरीं
तां द्वारिकां सागरमध्यसंस्थिताम् ।
विहाय दिव्यां मथुरां यदोः पुरीं
सभ्रातृमित्रः ससुहृत्सयादवः ।।२३।।

शोचाम्यहं नैव तथापि कर्हिचि-
न्न वै प्रहृष्यामि जगद्धचनेहसा ।
विद्रावितं कर्मवशं बलीयसा
तद्दैवयुक्तेन नभस्वताभ्रवत् ॥२४॥

अद्यापि सर्वे क्षितिपाः पराजिताः
वीराग्रणीयूथपयूथपा वयम् ।
कृष्णान्वितैः स्वल्पबलैर्हि यादवैः
कालानुकूलैस्त्रिदशैरिवासुराः ॥२५॥

आत्मानुसारिण्यधुना ह्यनेहसि
जिग्युर्द्विषोऽस्मान्नियतेः प्रदक्षिणा ।
यदा भवेत्तर्हि वयं त्विमान्रिपून्-
जेष्याम एवं जगदुर्महीभृतः ॥२६॥

प्रबोधितो मागधशाल्वकादिभि-
रेवं चिदीशः स्वसुहृद्धितानुगः ।
अगात्पुरं ते च हतावशेषिताः
स्वं स्वं पुरं जग्मुरवाङ्मुखा ह्रियाः ॥२७॥

रुक्मी गृहस्थो भगिनीं भवप्रिया-
सम्पूजनार्थं नगराद्बहिर्गताम् ।
सुसम्प्रतीक्ष्यन्नवदत्पुरोधसं
विवाहवेलां विगतां विलोक्य वै ॥२८॥

कस्मान्न दुर्गाभवनात्समागता
स्वसा मदीया करपीडनस्य वै ।
वेला व्यतीता नहि वेद्मि कारणं
दूता गतास्तेऽपि समागता न च ॥२९॥

वामाक्षिवाहूरुमुखा ममाङ्गाः (?ण्यपाङ्गाः)
स्फुरन्ति दुःखं परिसूचयन्ति ।
किं वा हृता द्वारवतीश्वरेण
स्वसा मदीया कपटं विधाय ॥३०॥

मीमांसमानं हि तमूचिरे चराः
सम्मोहयित्वा क्षितिपान् स्वमायया ।
कृष्णेन भैष्मी रभसा हृता पुन-
र्जिता नृपा जग्मुरवाङ्मुखा इति ॥३१॥

सेना हता[स्]ताः यदुभिर्महामृधे
नृपा हता ये हरिसन्मुखं गताः ।
रामादिभिः चेदिपमागधादयो
गतापमानाः समरे ह्युपेक्षिताः ॥३२॥

पराजितास्ते रुधिरप्लुता ह्रिया-
ऽप्यवाङ्मुखास्त्वाननुमन्त्र्य भूभृतः ।
स्वं स्वं पुरं जग्मुरनीकनीपति-
र्हतस्त्वदीयो बहुसेनया युतः ॥३३॥

अन्ये नृपाश्चापि पुरं स्वकं स्वकं
जग्मुः समन्तात्समरे पराजिताः ।
सम्भिन्नगात्रा यदुतो भयाकुलाः
स्तम्बेरमाः सिंहहता यथा वने ॥३४॥

तेषां शरापातमुखे युगान्त-
कृशानुतुल्ये पतिता नृपा ये ।
नष्टाः क्षणेनैव तृणोपमाना
दृष्ट्वान्य ईयुस्तु पलायनं तत् ॥३५॥

रुक्मी स्वसूराक्षस पाणिपीडनं
श्रुत्वासहन्[1] कृष्णरिपुः शुचाकुलः ।
अक्षौहिणीसंवृत आशु पृष्ठतो-
ऽन्वगाद्रुषा दन्तधृताधरो बली ।।३६।।

तमाह भीष्मो नृपतिः प्रबोधयन्
कृष्णेन साकं नहि तेऽरिता क्षमा ।
नारायणं ह्येनमवैहि शेषा-
शेषागमस्तुत्यमजापरं परम् ।।३७।।

कृष्णं शिवब्रह्ममुखैः सुरोत्तमै-
र्ध्येयाब्जपादं निखिलाघनाशनम् ।
सच्चिद्घनानन्दतनुं सतां मुदे
भूभारनाशाय च जातमेहि वै ।।३८।।

रामं ह्यनन्तं त्वमवैहि यादवां-
स्तत्पार्षदानेव यदोः सुकीर्तये ।
कुलेऽवतीर्णान्निजधर्मवर्त्तिनां
सम्पाल[ना]यासुरनाशनाय तान् ।।३९।।

स्वीयां स्वसारं त्वमवैहि पद्मजां
गेहेऽवतीर्णां मम कीर्तये पराम् ।
कृष्णप्रियां कृष्णरतामलौकिकीं
शेषाजशर्वेन्द्रनुतां सुखात्मिकाम् ।।४०।।

तस्मात्सदानन्दसुखात्मकेन
परात्परेणाखिलदैवतेन ।
हृता मदीया तनया पराश्री-
स्तस्मिन्नना तद्दयिता स्वसा ते ।।४१।।

---

१. भूमिकायां कृदन्तप्रयोगः द्रष्टव्यः ।

कृष्णस्य नात्रास्त्यनयस्त्वदीयो
यस्मात्तदीयां दयितां हि रुक्मिणीम् ।
चैद्याय दातुं त्वमभीप्ससे हठा-
ज्जानन्स्वसारं मुनिवक्त्रतो रमाम् ।।४२।।

एते हता भूपतयः ससैन्यका
भूमेर्भरा गोद्विजधर्मदूषकाः ।
कृष्णद्विषो रामगदादिभिर्मृधे
वीरैरतुल्यातिशयस्य पार्षदैः ।।४३।।

तस्मात्समाहूय सरामयादवं
कृष्णं प्रणामैस्त्वमरं प्रसाद्य तम् ।
देह्यादरा[त्]स्वां भगिनां परां रमां
कृष्णाय मोदं प्रददन्कुलस्य वै ।।४४।।

यदा त्वजिष्यस्यपहाय मद्वचो
युद्धाय कृष्णेन परात्परेण वै ।
कुरूपतां यास्यति नाशमेष्यति
सेनाभिमानं बलवीर्यमाशु ते ।।४५।।

सम्पीडयन् बाहुममर्षितः स्पृशन्
श्मश्रूणि गर्वेण पुनः पुनारदैः ।
दष्टोऽधरो वेल्लितदृङ्मुहुः सृजन्
श्वासान्न सुश्राव वचः पितुर्बली ।।४६।।

।। इति श्रीकान्हजीभट्टात्मजबालमुकुन्दभट्टविरचिते
रुक्मिणीमङ्गलाख्ये काव्ये एकादशः सर्गः ।।११।।

## ॥ द्वादशः सर्गः ॥

—:०:—

सुखप्रदं स्वौषधिवत्पितुर्वचो-
ऽनादृत्य रुक्मी कुमतिर्ह्यमर्षितः ।
संश्रृण्वतां सर्वमहीभुजां महा-
बाहुः प्रतिज्ञामकरोद्धठेन सः ॥१॥

कृष्णं ह्यहत्वा समरे सुदुर्मदं
भैष्मीमनानीय च कुण्डिनं पुरम् ।
नाहं प्रवेक्ष्यामि सुसत्यमेतद्
ब्रवीमि वोऽग्रे स्वधनुः प्रगृह्य वै ॥२॥

रुक्मीति चोक्त्वा कवचावृतो रथ-
मारुह्य यन्तारमुवाच सत्वरः ।
तुरङ्गमान्नोदय द्वारिकापतिः
कृष्णो यतस्तस्य भवेन्मृधं मया ॥३॥

अद्यैव बाणैर्निशितैः सुदुर्मते-
र्गोपस्य नेष्ये बलवीर्यजं मदम् ।
येन स्वसा मे प्रसभं हृतातुला-
नादृत्य मां वीर्यतिरस्कृताखिलम् ॥४॥

विकल्पमानः परमेश्वरस्या-
प्रमाणवित्सज्जधनुः कुबुद्धिः ।
गोविन्दमेकेन रथेन तिष्ठ
तिष्ठेत्यधावत्करिणं यथा श्वा ॥५॥

विकृष्य चापं सुदृढं त्रिभिःशरै-
जंघ्ने बलात्कृष्णमुवाच कोपतः ।
अत्र क्षणं यादववंशपांशन
तिष्ठाद्य वीर्यं ह्यवलोकयामि ते ।।६।।

ममासमक्षं भगिनीं हविर्यथा
काको मुषित्वा त्वमरं क्व गच्छसि ।
अहं हरिष्येऽद्य मदं सुमायिनो
मन्दस्य शत्रोस्तव कूटयोधिनः ।।७।।

यावन्न मे त्वं विशिखैर्हतः कौ
शयीथ तावत्त्यज मत्स्वसारम् ।
इत्थं ब्रुवन्तं विशिखैः स्मयन्हरि-
श्छित्त्वा धनुः षड्भिरताडयत् स्मयन् ।।८।।

जघान वाहांश्चतुरोऽष्टभिः शरै-
र्द्वाभ्यां ध्वजं सूतमरं त्रिभिर्द्विषः ।
रुक्म्यन्यदादाय धनुस्तु पञ्चभि-
र्विव्याध कृष्णं विशिखैर्मृधे बली ।।९।।

तैस्ताडितस्तस्य धनुः शरौघै-
श्चिच्छेद कृष्णोऽथ स चापमन्यम् ।
जग्राह तं चाच्छिनदव्ययोऽथ
रुक्मी भृशं क्रोधसमाकुलोऽभूत् ।।१०।।

शूलं च शक्तिं परिघं च पट्टिशं
सचर्मखड्गं मुसलं च तोमरम् ।
शस्त्रं स यद्यत्स उपाददे त-
त्तदच्छिनत् सर्वमसौ हरिर्हि ।।११।।

रथादवप्लुत्य ततोऽसिपाणि-
र्जिघांसया भीष्मसुतस्तु रुक्मी ।
अभ्यद्रवत्कृष्णमरण्यवह्नि
पतङ्गवद्दन्तधृताधरः सः ।।१२।।

खड्गं तु तस्यापततः सचर्म
छित्वा शरैर्वै तिलशोऽच्युतोऽरिम् ।
तं रुक्मिणं हन्तुमुपाददेऽसिं
तिग्मं प्रचण्डारिशिरश्छिदं तम् ।।१३।।

दृष्ट्वा तदा भ्रातृवधोद्यतं सती
भर्त्तुः पतित्वा पदयोर्हि रुक्मिणी ।
भीविह्वलाङ्गा करुणं कृपार्णवं
जगाद तज्जीवनकाम्ययेश्वरम् ।।१४।।

योगेश्वरामेयबलाप्रमेया-
त्मन्देव देवाखिललोकनाथ ।
अधीश कल्याण महाभुजेश
हन्तुं न मद्भ्रातरमर्हसि त्वम् ।।१५।।

रुक्मिण्याः परिभीविकम्पिततरस्तन्वातिशोकेन वै
संशुष्यन् मुखयावरुद्धगलया नेत्राम्बुपूर्णास्यया ।
वैक्लव्यस्खलिताग्ररक्तकनकामूल्यस्रगा वत्सलः
कृष्णस्तत्र गृहीतकञ्जचरणो घातान्निवृत्तोऽभवत् ।।१६।।

बद्ध्वारिं वसनेन निन्दिततरं तं रुक्मिणं वेगतः
कृष्णस्तीव्रमसाधुकारिणमसौ मेषं यथा मेषपः ।
तेनैवासिवरेण तस्य चिकुरान् श्मश्रूणि सम्मुण्डयन्
किञ्चित्किञ्चिदपि त्यजन् व्यरूपयद्यच्छन् फलं कर्मणाम् ।।१७।।[1]

तावद्रामगदादयो यदुवरा वीरा ममर्दुर्बलं
भैष्मस्याद्भुतनागवाजिरथमद्विक्रान्तयुक्तं बलात् ।
मत्तेभः नलिनीर्यथाथ सरितास्तद्रक्तजाः प्राभवन्
पत्तीभाश्वधरोद्भवाश्च शतशो जिष्णोर्महानन्ददाः ।।१८।।

हत्वा रुक्मिबलं क्षणेन दहनास्तृण्यां यथा यादवा-
स्ते कृष्णान्तिकमेत्य तत्र ददृशुस्तं रुक्मिणं संसितम् ।
चैलेनानतकन्धरं बहुकुरूपं श्मश्रुकेशो[ज्]झितं
श्येनं छिन्नतनूरुहं ह्यवमृतप्रायं विपत्त्यास्पदम् ।।१९।।

दग्धास्यं बत कज्जलेन चरणत्राणावलीभूषितं
बद्धं कुञ्चितविग्रहं कुयशसा लोकांल्लिपन्तं शठम् ।
दृष्टवा रुक्मिणमात्मकर्मगतिसंयुक्तं तदा यादवाः
प्रोचुर्लोकविरुद्धकारिण इदं युक्तं फलं कर्मणाम् ।।२०।।

हसन्त ऊचुर्यदवः परेशं
कृष्ण त्वया दत्तमहो सुरम्यम् ।
श्यालाय देयं करपीडने स्वे
कोऽपीदृशं वै नहि दातुमीशः ।।२१।।

---

१. श्लोकस्यास्य सदृश एव अस्य पश्चाद्वर्त्तिश्लोकोऽपि वर्तते—
कृष्णस्तीव्रमसाधुकारिणमरिं ते रुक्मिणं वाससा
बद्ध्वा केशरिणं मृगेन्द्रवदथो सश्मश्रुकेशान् त्रपात् ।
तेनैवासिवरेण मेषप इवोरभ्रं शठं मुण्डयन्
नत्यन्तं सुविरूपवक्त्रमकरोद्यच्छन्फलं कर्मणाम् ।।१८।।

दृष्ट्वा बलस्तं मृततुल्यमाकुलं
विमुच्य बद्धं करुणार्णवो विभुः ।
उवाच कृष्णं भगवानसाध्विदं
त्वया कृतं नोऽति जुगुप्सितं हरे ।।२२।।

श्मश्रोः कचानां वपनं विरूपता
वधोऽस्ति लोके सुहृदो रिपोः सदा ।
(इत्थं वदित्वा तनयस्य चाग्रे
जगाद भैष्मीमनुसान्त्वयन् बलः) ।।२३।।[1]

असूयया स्यान्न समीक्ष साध्वि भो
स्वभ्रातृवैरूप्यविचिन्तयानघे ।
नान्योऽस्ति कश्चित्सुखदुःखदो यतः
स्वकर्मभुक् सर्वजनः समीक्ष्यते ।।२४।।

रामोऽनुजं प्राह पुनः स्वबान्धवो
वधार्हदोषोऽपि वधं न बन्धुतः ।
अर्हत्यतस्त्याज्यतरः स्वदोषतो
हतः पुनः किं बत हन्यते हरे ।।२५।।

भैष्मीं पुनाराम उवाच वेधसा
धर्मो नृपाणामयमाविर्निर्मितः ।
भ्रातापि हन्यात्सहजं यतस्ततो
घोरोऽत्र नः को ह्यपराध आर्ये ।।२६।।

---

१. अस्य पद्यस्य तृतीयचतुर्थचरणयोःकृते पत्र प्रान्ते एवं रूपमपि विद्यते —
"कृष्णं गिराक्षिप्य निजानुजं बलो
जगाद भैष्मीमथ सान्त्वयन्गिरः ।।"

कृष्णं पुनः प्राह बलोऽर्थराज्ययो-
भूमेः स्त्रियोऽन्यस्य च मानतेजसोः ।
हेतोः क्षिपन्ति ह्यभिमानिनो जना
ये श्रीमदान्धाः नहि योग्यमस्ति नः ।।२७।।

रामस्तां पुनराह भैष्मि विषमा बुद्धिस्तवेयं शुभे
भ्रातॄणां निखिलेषु जन्तुषु विपक्षाणां शुभं वै तथा ।
चैद्यानामशुभं त्वमिच्छसि यतस्तेषामिदं मुण्डनं
दण्डात्म्यं शिवमेव जातमशुभं तन्मन्यसे मूढवत् ।।२८।।

यस्मात्त्वत्सहजोत्तमाङ्गवपनं चैद्यादिसैन्यक्षयो
जातं भद्रमिदं सतां ससुहृदां त्वं मन्यसे चाशिवम् ।
नृणामात्मविमोह एष हरिमायातः शुभे कल्प्यते
औदासीन इति द्विषश्च सुहृदो देहात्मसम्मानिनाम् ।।२९।।

सर्वेषां तनुधारिणामपि परो ह्यात्मैक एवास्ति स-
च्चिन्मूढैर्बहुधेयते गगनवत् कुम्भेषु चन्द्रादिवत् ।
कीलालेष्वथ देह आदिलयवान्नानेष(व)भूतेन्द्रिय-
ज्ञानात्म्यः परिपीडयत्यसुभृतं क्लृप्तं कुमत्यात्मनि ।।३०।।

नस्तोऽन्येन कलेवरेण सति संयोगो वियोगोऽसता
तद्द्योतातपकस्य चात्मन इहेनस्येव दृग्रूपयोः ।
जन्माद्या विविधाः क्रियास्तु वपुषां दृष्टा कलानामिवे-
न्दोः क्वापि न चात्मनोऽस्य(ऽस्त्य)मरणं दर्शो यथा सच्चिदः ।।३१।।

यथा शयानः पुरुषोऽनुभुङ्क्ते
भोग्यांश्च भोक्तारमहो नु भोगम् ।
अर्थे ह्यसत्येवमविद्ययाढ्यः
प्राप्नोति संसारमनूद्भवात्ययम् ।।३२।।

तस्मादपाकृत्य शुचिस्मिते शुच-
मज्ञानजं स्वात्मविशोषमोहनम् ।
संसारदुःखप्रदमात्मबोधतः
स्वस्था भवानन्दसमुद्रमाभज ।।३३।।

एवं विदर्भेशसुता प्रबोधिता-
नन्तेन रामेण परात्परेण वै ।
तद्वैमनस्यं ह्यपहाय मानसं
समादधे चेतनया गभीरया ।।३४।।

संशृण्वतोऽपीत्थमनन्तभाषितं
न रुक्मिणो क्षान्तिरुषाकुलस्य तत् ।
निवृत्तमज्ञानमतीव दुःखदं
कृष्णाङ्घ्रिसेवाविमुखत्वकारणम् ।।३५।।

प्राणावशेषोऽरिभिराहतप्रभा-
नीकः समुत्सृष्टतरः सुदुर्मनाः ।
स्मरन्विरूपाकरणं ह्यवाङ्मुखो
बभूव रुक्मी विततात्मदोहदः ।।३६।।

महत्पुरं भोजकटाह्वयं तद्-
भूमौ निवासाय हतात्मकामः ।
चक्रेऽथ भूभृन्निकटे जगाद
रुक्मी स्ववाक्स्थापक ईर्ष्ययाढ्यः ।।३७।।

कृष्णं ह्यहत्वा पशुपालकं मृधे-
ऽनावर्त्य भैष्मीं भगिनीं च कुण्डिनम् ।
नाहं प्रवेक्ष्यामि स भीष्मजस्तदे-
त्युि[क]त्वावसत्तत्र रुषा कुरूपतः ।।३८।।

।। इति श्रीद्राविडकान्हजीभट्टात्मजबालमुकुन्दभट्टविरचिते
रुक्मिणीमङ्गलाख्ये काव्ये द्वादशः सर्गः ।।१२।।

## ॥ त्रयोदशः सर्गः ॥

—:०:—

एवं विनिर्जित्य नृपान् महाबलीन्
कृष्णोऽखिलेशः कमलां विदर्भजाम् ।
हृत्वा ययौ द्वारवतीं बलान्वितो
दिविस्थितैर्देवगणैः सुपूजितः ॥१॥

विकीर्यमाणः कुसुमैः सुरोत्तमै-
रभिस्तुतः सोऽक्षतवाहिनीयुतः ।
वीणामृदङ्गानकशङ्खदुन्दुभि-
संरावयुक्तो स्वनुमोदितोऽखिलैः ॥२॥

प्रत्युद्यतैर्द्वारवतीनिवासिभि-
र्जनैर्मिलित्वा मुदितात्मभिर्निजैः ।
सुविञ्जरैः (सुविद्वरैः) मङ्गलपाणिभिः प्रभु-
र्नीराजितो विप्रगणैरभिस्तुतः ॥३॥

सङ्गीयमानविजयः स्तुतिपाठकैश्च
सूतैः समागधगणैः शुभवाग्भिरीशः ।
सत्याशिषाद्द्विजवरैरभियुज्यमान-
स्तां द्वारिकामभिविवेश रमान्वितो हि ॥४॥

भेरीमृदङ्गपटहानकशङ्खवीणा
तूर्याण्यनेकशतशः परितो निनेदुः ।
कृष्णे पुरं प्रविशति त्रिदिवेश्वराः सन्-
माल्यं ववर्षुरबला ननृतुर्दिविस्थाः ॥५॥

संसिक्तमार्गां करिणां मदाम्भसा
सुगन्धवार्भिश्च सुहृष्टनागराम् ।
लसत्पताकाभिरलङ्कृतां पुरीं
निनादितां वेदरवेण सर्वतः ॥६॥

तां कौतुकाबद्धसुतोरणां प्रति
द्वारं सुरौक्मैः कलशैः सवारिभिः ।
दध्यक्षताच्छादनमाल्यपल्लव-
दीपावलीभिः कदलीभिरर्चिताम् ॥७॥

विवेश कृष्णो रमया समेत-
स्त्रैलोक्यशोभैकनिकेतनो हरिः ।
निचीयमानो ललनाभिरादराद्
दध्यक्षतैरङ्कुरमाल्यशर्षपैः ॥८॥

निरीक्ष्यमाणः प्रमदप्रफुल्ल-
नेत्रैः सहार्द्दं परितोऽङ्गनाभिः ।
पुरस्कृतश्चामरदिव्यशुभ्र-
च्छत्रैः रथस्थो रमया बभौ सः ॥९॥

सूर्येन्दुतारानिकरैः युतो यथा
नवीननीलाम्बुधरोऽम्बुधारया ।
युक्तः स्थिरैरावर्तिकः सकैतवो
विभूषितो यो वनमालया बभौ ॥१०॥

नीराजितो मातृभिरब्जजान्वितो
विवेश गेहं परमोत्तमं हरिः ।
नत्वा गुरून् मातृगणान् द्विजोत्तमान्
मित्राणि चालिङ्ग्य निरीक्ष्य वै निजान् ॥११॥

निमन्त्रयामास ततो निजान् नृपा-
न्रामः समन्तात्परमादरेण वै ।
कृष्णोपयामस्य निरीक्षणाय ते
समागता द्राक् परमोत्सवान्विताः ॥१२॥

भीष्मः सदारः स्वयमेव हार्दतः
समागतो रत्नसुवर्णसंयुतः ।
सुतां प्रदातुं विधिवत् परां रमां
कृष्णाय योग्याय परात्पराय सः ॥१३॥

युधिष्ठिरो भ्रातृसमन्वितस्तथा
कैकेयकाः कौरवकुन्तयश्च ।
ते सृञ्जयाः प्रेमयुताः सहस्रशो-
ऽन्ये भूभृतः प्रेमयुताः समागताः ॥१४॥

शेषो हि नाथै(नागै)रुमया महेशः
स्वपार्षदापत्यगजाननाद्यः ।
ब्रह्मा सदारः पुरुहूतकाद्याः
लोकाधिपा[श्[1]]चेयुरतीव मोदात् ॥१५॥

देवर्षयश्चैव महर्षयश्च
राजर्षयो भृत्यकलत्रपुत्रैः ।
युताः समीयुर्ह्यवलोकनार्थं
कृष्णं सदारं परमप्रमोदात् ॥१६॥[२]

---

१. "चेयुरतीवमोदात्" इत्यस्तकृते तत्रैव "पुत्रकलत्रभृत्यैः ॥१५॥
इत्यपि पाठो विद्यते ॥

२. श्लोकोऽयं पत्रप्रान्ते लिखितःयस्तु प्रसङ्गवशादत्र उल्लिखितः ॥

विवाहवेदीं मणिहाटकोत्तमैः
ब्रह्मादयश्चक्रुरतीव बुद्धितः ।
अलौकिकीं हृन्नयनातिमोददा-
मा[श्]चर्यदां देवगणस्य हृद्दृशाम् ॥१७॥

तन्मण्डपाच्छादनमत्यलौकिकं
सत्स्वर्णरत्नैः समलङ्कृतं वरम् ।
लोलद्धरिद्ररक्तसुनीलमौक्तिक-
प्रवालवैदूर्यविचित्ररत्नकम् ॥१८॥

चक्रुर्द्विजाग्रा मतिमत्सुमुख्याः
प्रीत्या यथा विष्णुपदं ग्रहैर्हि ।
उपोपविष्टैः समलङ्कृतं तत्
तथा बभौ लोकमनोहरं द्राक् ॥१९॥

तस्यां सभायां यदवो विरेजुः
पुष्टाग्रकोष्णीषधराः सुवेशाः ।
सुकञ्चुकाः कुण्डलिनः सुहारा
उपोपविष्टाः परमोत्सवाढ्याः ॥२०॥

विप्रा विरेजुः वरपीतवस्त्राः
सुकर्णभूषा मणिहारिणो वै ।
इन्द्रादयो देवगणाश्च सर्वे
निमेषशून्याः निखिलासुमन्तः ॥२१॥

रराज वेद्यां रमया रमेशः
कृष्णस्तदातीव हरन् मनांसि ।
दृशश्च तेषां निजशोभया सः
ददन् महामोदमलौकिकं वै ॥२२॥

नेदुर्मुहुः शङ्खमृदङ्गदुन्दुभि-
वीणानकाझर्झरवेणवस्तदा ।
सहस्रशो लोकमनोहरा रवाः
महोत्सवे मोदभरैर्निनादिताः ।।२३।।

गन्धर्वकिम्पूरुषकिन्नराः समं
जगुर्मुदा लोकमनोहरं तदा ।
सुराङ्गनाः सन्ननृतुर्दिवौकसः
प्रचिक्षिपुर्नन्दनमल्लिका वराः ।।२४।।

महोत्सवस्तत्र गृहे गृहे यदु-
पुर्य्यां नृणां देवसुविस्मयावहः ।
कृष्णे रतानां तदनन्यरागिणा-
मभून्महानन्दमयोऽनुरागजः ।।२५।।

नराश्च नार्यो मुदिताः वराम्बराः
प्रमृष्टकर्णाभरणाङ्गदोर्म्मिकाः ।
मोदादुपाजह्रुरुपायनं वरं
भैष्मीशयो रम्यविचित्रवाससोः ।।२६।।

नानारसौघाः सरितो द्रुमा मधु-
स्रवाः दधुर्दिव्यमणीन्धराधराः ।
अकृष्टपच्यौषधयोऽभवन्धरां
पयोद्रुतां धेनव आनयन् मुदा ।।२७।।

कृष्णोपयामेऽसुभृतः स्वभावतः
क्रूरा ह्यपि वैरविहीनमानसाः ।
बभूवुरानन्दघनं विलोक्य ते
सर्वे महानन्दमवापुरुत्सवे ।।२८।।

रत्नाकराः स्वोर्मिभिरग्ररत्न-
समूहमूहुर्हरितेश्वराश्च ।
निजां निजां सिद्धिमभीप्सितां वै
कृष्णोपयामे परमोत्सवात्ते ।।२९।।

सद्भक्ष्यभोज्यानि सुलेह्यचोष्यं
ददुः समन्तान्निखिलाः सुभृत्याः ।
सुवर्णरत्नाभरणानि स्वर्ण-
धेनूर्द्विजातिभ्य रुशत्तमाश्च ।।३०।।[1]

फलप्रवालाङ्कुरपुष्परूपतो
मण्युत्तमा यत्र यथायथं गताः
तेषां महाविस्मयदं मनोहरं
किमे(किं वे)तराणां सुषमालयं महत् ।।३१।।

ग्रहैर्यथा विष्णुपदं स्वलङ्कृत-
मुपोपविष्टैर्वररश्मिभिर्युतैः ।
द्रव्यैर्नवीनं ह्यधिकं ततोऽपि तद्
बभौ हि कृष्णस्य विवाहमण्डपम् ।।३२।।

---

१. अस्यश्लोकस्य पश्चात् यौ श्लोकौ क्रमशः लिखितौ, तौ उभावेव अस्मिन्नेव सर्गे पूर्वागतौ ।।१७।।, ।।१८।। इत्युभाविव, तस्मादत्र पाद टिप्पण्यां प्रस्तूयेते—

"विवाहवेदी मणिहाटकोत्तमैर्ब्रह्मादयश्चक्रुरतीव हृत्प्रियम् ।
अलौकिकीं विस्मयदां दिवौकसां सुदर्शनीयां परमादरेण ते ।।
तन्मण्डपाच्छादनमत्यलौकिकं सत्स्वर्णरत्नै. समलङ्कृतं बहु ।
लोलद्धरिद्रक्तसुनीलमौक्तिकप्रवालवैदूर्यविचित्ररत्नकम् ।।
पूर्वागतयोः श्लोकद्वयस्याश्य चातीव साम्यम् ।

तस्यां हि वेद्यां भगवान् यदूत्तमः
कृष्णो विरेजे रमणीयभूषणः ।
लक्ष्म्या विदर्भेशजया मनोज्ञया
विचित्ररत्नांशुकया सुसंयुतः ।।३३।।

सम्पूज्याङ्घ्रिसरोरुहं भगवते कृष्णाय पद्मां सुतां
हस्ते गृह्य ददौ सुराग्नचवनिदेवानां मुदा पश्यताम् ।
सस्त्रीको स विदर्भपो नयनयोः प्रेमाश्रुमुञ्चन् स्खल-
द्वाग्रोमाञ्चितविग्रहो हि परमानन्दप्लुतोऽलङ्कृताम् ।।३४।।[1]

गृहाण पुत्रीं मम यादवेन्द्र
सर्वात्मना कृष्ण हृदोऽनुरूपाम् ।
ददामि धर्मेण परेण तुभ्य-
मित्याह भीष्मः प्रणयेन वाचम् ।।३५।।

आवाह्य वारीशगणेशपार्वती-
मुखान्विभूनीर्विधिवत्समर्चयत् ।
वेद्यां यथावद्द्विजवर्यवाक्यतः
कृष्णो विदर्भेशसुतान्वितस्तदा ।।३६।।[2]

---

१. पत्रप्रान्ते श्लोकस्यास्यैव एवंविधस्वरूपम्—

"संपूज्याङ्घ्रिसरोरुहं भगवते कृष्णाय कन्यां निजां
पद्मां पाणितले प्रगृह्य नृपतिर्भीष्मः सदारो मुदा ।।
मुञ्चन्प्रेमजलं पुरोऽग्निसुरविप्राणां ददौ सत्कृतां
रत्नस्वर्णविभूषितां सुवसनां लग्नेऽतिशुद्धे शुभे ।।

२. श्लोकस्यास्य च एवं विधम्—

"आवाह्य वारीशगणेशगो(पा)र्वतीगन्धाक्षतापोभिरपूजयद्वै ।।
वेद्यां यथावद्विधिवद्द्विजाग्र्यवाक्येन कृष्णो रमयान्वितो हि ।।

विदर्भराजस्य पुरोहितोऽभवत्
श्रीनारदः श्रीहरिदर्शनेच्छया ।
सौरेस्तु गर्गोऽस्ति पुरोहितो ह्युभौ
श्रीकृष्णयोश्चक्रतुरात्मकर्मकम् ।।३७।।

नेदुः शङ्खमृदङ्गदुन्दुभिमुखास्तस्मिन्क्षणेऽनेकशो
देवानन्दनपुष्पवर्षमतुलं कुर्युः प्रमोदाकुलाः ।
देव्यः सन्ननृतुर्जगुः सवनशो गन्धर्वकिम्पूरुषाः
विप्राः साध्विति साध्विति ह्यतितरामूचुः समन्तान्मुदा ।।३८।।

धन्यं गोत्रमिदं विदर्भनृपतेर्धन्यो विदर्भेशजो
धन्या चास्य वधूर्हि यत्र तनया जाता रमा रुक्मिणी ।
धन्योऽयं दिवसो मुहूर्त उपयामो यत्र भैष्मीशयो-
र्दृष्टोऽस्माभिरतीवपुण्यनिचयैरित्यूचिरे प्राणिनः ।।३९।।

धन्या श्रीयदुसन्ततिः क्षितितले धन्यो वसु-
देवो यत्र बभूव नीलजलदश्यामोऽखिलेशो विभुः ।
कृष्णः सत्सुखचिद्वपुर्हि भगवान् ब्रह्मेशमुख्यैः सदा
ध्येयाब्जाङ्घ्रितलस्त्रिलोकसुषमाधिष्ण्योऽवतीर्णोऽभवत् ।।४०।।

गर्गादयो (?दिको) विप्रगणाः(णो) हि शाखो-
च्चारं समन्ताद्विदधे[1] विवाहे ।
कृष्णस्य भैष्म्याश्च यथाक्रमेण
परेशमारभ्य कुलस्य विज्ञाः ।।४१।।

श्रीमन्नारायणस्याखिलभुवनपतेर्नाभिकञ्जाद्विधाता
तस्यात्रिः पितृतुल्योऽस्य दृशि सुखजलाच्चन्द्रमाभूत्सुधाढ्यः ।
सौम्यस्यैलोऽस्य चायोर्नहुष इति सुतस्तद् ययातेर्यदुस्तत्-
क्रोष्टस्यापि चासीन्नृपतिवृजिनवांस्तस्य स्वाहेर्रुशेकुः ।।४२।।

---
१. विदधुर्विवाहे ।

तस्माच्चित्ररथः सुतोऽस्य शशिविन्दुस्तस्य दीर्घश्रवा
तद्धर्मोऽस्य हि चोशनाश्च रुचक[स्]स [त]ज्ज्यामघोऽस्येशतुः ।
शैव्यानन्दननामकोऽस्य च क्रथस्तस्मात्सुतो वृष्टिमां-
स्तस्मान्निर्वृतिराट्दशार्हजनकस्तस्माद्धि जीमूतकः ।।४३।।

तस्यासौ विकृतिश्च भीमरथको तस्मान्नवस्यन्दनः
पुत्रोऽस्य क्षितिपेश्वरो दशरथस्तस्मात् करम्भिर्नृपः ।
तत् पुत्रो बत देवराडिति सुदेवक्षत्रकोऽस्मान् मधु-
स्तस्याग्र्यस्तनयो महान् कुरुवशस्तस्यानुरस्यायुकः ।।४४।।

आयोर्वै भजमानको नृपतिनां मौलिर्विधातेव वै
तस्यासीच्च विदूरथोऽस्य तनयः शूरोज्झिताशापतिः ।
तत्पुत्रो वसुदेवनाम विदितोऽयं यस्य जन्मस्थलं
देवा वाद्यमवादयन् बहुविधं ज्ञात्वा हरेरालयम् ।।४५।।

हर्षेणानकदुन्दुभिर्वदति यं कृष्णस्य सच्चित्परा
नन्दाङ्गस्य जनुक्षितिं सुरगणानानन्दयन्सद्रवैः ।
तस्यैषस्तनयस्त्रिलोकसुषमाधिष्ण्यो हि कृष्णः पर-
ब्रह्माख्यो भगवान् परात्म इति गर्गाद्याः समूचुः कुलम् ।।४६।।

विदर्भपुत्र्यास्तु कुलस्य वर्णनं
श्रीनारदः संविदधे विधानतः ।
नारायणस्याखिलकारणस्य वै
नाभ्यब्जजादास चतुर्मुखो विधिः ।।४७।।

विधेः सुतोऽत्रिः समभूत्ततो दृशोः
प्रेमाश्रुतः शुभ्रकरस्ततो बुधात् ।
पुरूरवास्तस्य बभूव चायु-
स्तस्यात्मजो वै नहुषः सुरेशवत् ।।४८।।

ततो ययातेः समभूद्यदुस्ततः
क्रोष्टोऽस्य पुत्रो वृजनारिरास वै ।
स्वाहेः रुशेकुर्हि ततोऽपिचित्रक-
रथस्ततो वै शशिविन्दुरस्य वै ।।४९।।

पृथुश्रवास्तस्य सुतो हि धर्मक-
स्तस्योशनास्तद्रुचकोऽस्य ज्यामघः ।
तस्माद्विदर्भोऽस्य कुशोऽस्य भूपति-
रस्यास भीष्मो ह्यतुलप्रभावः ।।५०।।

तस्येयमासीत्तनया च रुक्मिणी
साक्षाद्रमा कृष्णरतातुलापरा ।
कृष्णस्य योग्या कुलरूपशीलतो-
ऽस्याः कृष्ण एवेति जगाद नारदः ।।५१।।

प्रदक्षिणाः पञ्चहुताशनस्य तौ
जायापती चक्रतुरीश्वरार्चितौ ।
अनन्तरत्यात्मभुवोः श्रियो हरौ
सम्मोहयन्तौ जगदात्मशोभया ।।५२।।

सम्पश्यतां स्वीयरमान्वितं हरिं
दिवौकसां गेहसुतात्मविस्मृतिः ।
आनन्दसिन्धोरमृतं नवीन-
सुस्वादयुक्तं पिबतामिवाभवत् ।।५३।।

आनन्दाब्धिसुवृद्धिरास हृदये नारीनराणां महा-
नन्देन्दुं परिपूर्णमात्मकलया युक्तं कलङ्कोज्झितम् ।
रुक्मिण्या सहितं विलोक्य परमेशं कृष्णमारात्स्खलद्
वाचामङ्कुरिताङ्गिनां मुदजलं सम्मु [ञ्चतां प्रेमतः] ।।५४।।

(एतावानेवोपलब्धोऽयं ग्रन्थः)

# परिशिष्टानि १

रुक्मिणीमङ्गलस्य श्रीमद्भागवतस्य च ये ये श्लोकाः परस्परमतीव साम्यं भजन्ति ते तेऽत्र प्रस्तूयन्ते—

श्रीमद्भागवतम् | रुक्मिणीमङ्गलम्

कच्चिचतेद्विजवरश्रेष्ठ धर्मस्ते वृद्धसम्मतः ।
वर्तते नातिकृच्छ्रेण सन्तुष्टमनसः सदा ॥१०।५२।३०

सन्तुष्टो यर्हि वर्तेत ब्राह्मणेन येन केनचित् ।
अहीयमानः स्वाद्धर्मात्स ह्यस्याखिलकामधुक् ॥३१॥

कश्चिचतेद्विजवर्यतुष्टमनसो वर्तेत कृच्छ्रेण न
धर्मो वृद्धसुसम्मतो यदि भवेत्तुष्टः सदा ब्राह्मणः ।
यत्केनाल्पमहीयमान इति स्वं धर्मं स विप्रो भवे-
ल्लोकस्याखिलकामधुक् ददति ते धर्मो द्विजस्यार्थितम् ॥५।१६

असन्तुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः ।
अकिञ्चनोऽपि सन्तुष्टो शेते सर्वाङ्गविज्वरः ॥३२॥
विप्रान् स्वलाभसन्तुष्टान् साधून् भूतसुहृत्तमान् ।
निरहङ्कारिणः शान्तान्नमस्ये शिरसासकृत् ॥३३॥

सन्तोषाद्रहितः शचीपतिरपि क्लिष्टः सदा वर्तते
तुष्टोऽकिञ्चनकोऽपि तापरहितः शेते सदा विज्वरः ।
विप्रान् भूतसुहृत्तमान् सुनिरहङ्कारान् सुसाधूनहं
शान्तानात्मपदाप्तितुष्टमनसो वन्देऽसकृन्मौलिना ॥२०॥

कच्चिद्वः कुशलं ब्रह्मन्राजतो यस्य हि प्रजाः ।
सुखं वसन्ति विषये पाल्यमाना स मे प्रियः ॥३४॥

यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया ।
सर्वं नो ब्रूह्यगुह्यं चेत्किं कार्यं करवाम ते ॥३५॥

कच्चिते कुशलं द्विजाग्र्यनृपतेर्यस्य प्रजाः पालिता
देशे शं निवसन्ति वै स नृपतिः प्रेयान्ममातो यतः
तीर्त्वा दुर्गमिहागतो यदिहया सर्वं ह्यगुह्यं यदा
ब्रूहि त्वं करवाम विप्र सकलं कार्यं तवासंशयम् ।।२१।।

एवं सम्पृष्टसंप्रश्नो ब्राह्मणः परमेष्ठिना ।
लीलागृहीतदेहेन तस्मै सर्वमवर्णयत् ।।३६।।

एवं सः परमेष्ठिना भगवता लीलानराङ्गेन सं-
पृष्टो वृत्तमवर्णदग्र्यद्विजवरो भीष्मात्मजायाः शुभम् ।
कृष्णायाथ निवेदयद्रहसि या दत्ता लिखित्वा तया
प्रेमाङ्काङ्कितपत्रिकां प्रियकरीमुन्मुच्य मुद्रां चरः ।।२२।।

श्रुत्वा गुणान् भुवनसुन्दर शृण्वतां ते
निर्विश्य कर्णविवरैर्हरतोऽङ्ग तापम् ।
रूपं दृशां दृशिमतामखिलार्थलाभं
त्वय्यच्युताविशति चित्तमपत्रप मे ।।३७।।

श्रुत्वा ते भुवनैकसुन्दरगुणान्निर्विश्य सश्रृण्वतां
स्वान्तं कर्णविलैन चाशुहरतः ससारतापं प्रभो ।
शुभ्रांशूनिव सूर्यजं गुणनिधे तापत्रयैर्व्याकुल
त्यक्त्वा ह्रींविशतीश हृत्त्वयि ममेभो गाङ्गतोये यथा ।।६।३।।

का त्वा मुकुन्द महती कुलशीलरूप—
विद्यावयोद्रविणधामभिरात्मतुल्यम् ।।
धीरा पतिं कुलवती न वृणीत कन्या
काले नृसिंह नरलोकमनोऽभिरामम् ।।३८।।

का कन्या पुरुरूपशील गुणधीयुक्ता कुलीना कुल-
विद्यारूपवयोऽर्थधामगुणशीलैरात्मतुल्यं पतिम् ।।
काले त्वां न वृणीत भो यदुपते कृष्णार्तबन्धो नर-
श्रेष्ठ प्राणिमनोऽभिराम नयनानन्दासुनाथ प्रभो ।।५।६।।

तन्मे भवान् खलु वृतः पतिरङ्ग जाया-
मात्मार्पितश्च भवतोऽत्र विभो विधेहि ।।
मा वीरभागमभिमर्शतु चैद्य आराद्-
गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ।।३९।।

तस्मात्त्वं हि पतिर्वृतः खलु मया स्वात्मार्पितश्च प्रभो
जायां स्वस्य विधेहि मामिह समागत्यारमेवार्ति हन् ।
मा त्वद्भागमहोऽभिमर्शतु चिदेः पुत्रः समागत्य मां
पञ्चास्यस्य बलिं शृगालवदसौ पद्मायताक्षारिहन् ।।६।।

पूर्तेष्टदत्तनियमव्रतदेवविप्र-
गुर्वर्चनादिभिरलं भगवान् परेशः ।।
आराधितो यदि गदाग्रज एत्य पाणिं
गृह्णातु मे न दमघोषसुतादयोऽन्ये ।।४०।।

पूर्तेष्टव्रतदानतीर्थगुरुविप्रार्यार्चनाद्यैरलं
लक्ष्मीशो भगवान् परो यदि मया स्वाराधितो नित्यशः ।।
तर्ह्यागत्य गदाग्रजो मम करं गृह्णातु कृष्णः पति
र्नैवान्ये क्षितिपाः स्पृशन्तु शिशुपालाद्याः खरा गां यथा ।।७।।

श्वो भाविनि त्वमजितोद्वहने विदर्भान्
गुप्तः समेत्य पृतनापतिभिः परीतः ।।
निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य मां
राक्षसेन विधिनोद्वह वीर्यशुल्काम् ।।४१।।

श्वो भाविन्युपयामके त्वमजिताज्ञाताखिलै राजभि-
रेवागत्य विदर्भकान् परिवृतः सैन्याधिपैर्यादवैः ।।
निर्मथ्य प्रसभेन शाल्वदमघोषापत्यबार्हद्रथ-
सैन्यं ह्युद्वह राक्षसेन विधिना मां वीर्यशुल्कां विभो ।।८।।

अन्त.पुरान्तरचरीमनिहत्य बन्धू-
स्त्वामुद्वहे कथमिति प्रवदाम्युपायम् ।।
पूर्वेद्युरस्ति महती कुलदेवियात्रा
यस्यां बहिर्नववधूर्गिरिजामुपेयात् ।।४२।।

त्वामन्तःपुरवर्तिनीं कथमहं बन्धूनहत्वोद्वहे
चेदेवं प्रवदाम्युपयामात् पूर्वंघस्रेऽस्ति वै ।।
यात्रास्मत् कुलदैवतस्य महती यस्यां वधूर्नूतना
स्थानीयाद्वहिरम्बिकागृहमुपागच्छेत्तदा मां हर ।।१६।।

यस्याङ्घ्रिपंकजरजःस्नपनं महान्तो
वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै ।।
यर्ह्यम्बुजाक्ष नलभेय भवत्प्रसादं
जह्यामसून्व्रतकृशान् व्रतजन्मभिःस्यात् ।।४३।।

यत्पादाब्जरजोभिरात्मशमलध्वंसाय सत्पूरुषः
स्नानं वाञ्छति पार्वतीपतिरिव स्वान्ताघहन्त्रात्मदम ।।
यर्ह्यब्जाक्ष भवत्प्रसादमधुना न प्राप्नुयां तर्ह्यसूं-
स्त्वद्ध्यानेन मुहुस्त्यजेयमहमेवं जन्मभिः स्याच्छतैः ।।१६।।

इत्येते गुह्यसन्देशा यदुदेव मयाहृताः ।
विमृश्य कर्तुं यच्चात्र क्रियतां तदनन्तरम् ।।४४।।

इत्येते यदुदेव गुह्यतरसन्देशा मयोक्ता द्रुत—
मस्मिन् यत्करणीयमात्मनि विमृश्याश्वेव तच्छ्रीमता ।।
ईशेन क्रियतामिति द्विजवचोभिर्भीष्मजाया हरिः
सन्देशं तु निशम्य तत्क्षणमसौ स्वान्तेन भैष्मीं ययौ ।।२०।

वैदर्भ्याः स तु सन्देशं निशम्य यदुनन्दनः ।
प्रगृह्य पाणिना पाणिं प्रहसन्निदमब्रवीत् ।।१०।५३।१

सन्देशं द्विजतो विदर्भदुहितुः श्रुत्वा कराब्जेन तद्
धृत्वा पाणिमुवाच तं द्विजवरं कृष्णो दयालुर्हसन् ।।
रुक्मिण्याः हृदयं यथा मयि सदा वर्तेत तस्यां तथा
मत्स्वान्तं भगवन्नहं तु न लभे निद्रां क्षपायामपि ।।२१।।

तथाहमपि तच्चित्तो निद्राञ्च न लभे निशि ।
वेदाहं रुक्मिणा द्वेषान्ममोद्वाहो निवारितः ।।२।।

तामानयिष्य उन्मथ्य राजन्यापसदान् मृधे ।
मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव ।।३।।

वेदाहं हि निवारितः परिणयो मे द्वेषतो रुक्मिणा-
तो भूपापसदान् जरासुतमुखानुन्मथ्य संख्ये हठात् ।।
आनेष्याम्यनवद्यविग्रहवतीं तां मत्परामेधसो
ऽग्निर्ज्वालामिव विप्रवर्यवचनं सत्यं मयोक्तं तव ।।२६।।

उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः ।
रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ।।४।।

विज्ञायाथ विवाहभं द्विजवराद्रुक्मिण्याः हरिस्सूतमा-
हूय प्राह सुगुप्तमेव भवता संयुज्यतां मे रथः ।।२८।।

स चाश्वैः शैब्यसुग्रीवमेघपुष्पबलाहकैः ।
युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः ।।५।।

युक्तं सैन्यबलाहकाब्दसुमनः सुग्रीवकाख्यैर्मनो
वेगैरिन्दुकरोज्ज्वलैः सुतुरगैः श्यामैककर्णै रथम् ।
दिव्यं दिव्यसुवर्णरक्तजटितं दिव्यायुधाढ्यं ह्युपा-
नीय प्राञ्जलिरग्रतो भगवतस्तस्थौ रहो दारुकः ।।२९।।

आरुह्य स्यन्दनं शौरिर्द्विजमारोप्य तूर्णगैः ।
आनर्तादेकरात्रेण विदर्भानगमद्धयैः ।।६।।

आरुह्याथ रथं स्वयं द्विजवरं ह्यारोप्य तं तूर्णगै-
रश्वैर्भीष्मसुतासुहार्दरशनाकृष्टोऽप्यलक्ष्योऽखिलैः ।।
आनर्तात् क्षपयैकया स च विदर्भानागमन्नात्मनो
भक्त्यैवाप्तिरिति प्रबोधयदिव स्वीयेषु कृष्णो हरिः।।३०।।

राजा स कुण्डिनपतिः पुत्रस्नेहवशं गतः ।
शिशुपालाय स्वां कन्यां दास्यन्कर्माण्यकारयत् ।।७।।

पुत्रस्नेहवशं गतोऽथ नृपतिर्भीष्मोऽङ्गजां स्वां सुतां
हृद्वाग्वर्ष्मभिरीश्वरे यदुपतौ सक्तां प्रजानन्नपि ।।
दास्यंश्चेदिसुताय तां श्रुतिमिवाम्बष्ठाय वैवाहिकं
कर्माकारयदादरेण सकलैर्भृत्यैः सुतप्रीतये ।।७।१।'

पितॄन्देवान्समभ्यर्च्य विप्रांश्च विधिवन्नृप ।
भोजयित्वा यथान्यायं वाचयामास मङ्गलम् ।।१०।।

गीर्वाणान् स्वपितॄन्समर्च्य विधिवद्राजा विदर्भाधिपो
विप्रा वेदविदोऽन्नकैर्बहुविधैः सम्भोजयित्वादरम् ।।
स्वां कन्यां प्रति मङ्गलं सन्निधिना संवाचयामास तै-
र्मन्त्रज्ञैर्ग्रहशान्तयेऽनिलसखाथं ह्याजुहावाशु वै ।।४।।

सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम् ।।
अहतांशुकयुग्मेन भूषितां भूषणोत्तमैः ।।११।।

सुस्नातां सुदतीं शुभाहतनिचोलालङ्कृतां रुक्मिणीं
चूडारत्नसुवर्णभूषणगलालङ्काराङ्केयूरकैः ।।
नासालङ्क्रिययाङ्गुलीयककरभ्राजिष्णु काञ्चीतुला
कोट्याद्यैरभिभूषितां सुविदधुस्ते कौतुकैर्मङ्गलाम् ।।२१।।

चक्रुः सामर्ग्यजुर्मन्त्रैर्बध्वा रक्षां द्विजोत्तमाः ।
पुरोहितोऽथर्वविद्वै जुहाव ग्रहशान्तये ।।१२।।

सामर्ग्यजुर्मन्त्रवरैः द्विजाग्र्या
भैष्म्याः सुरक्षां विदधुर्विधिज्ञाः ।।
अथर्वणाचार्यपुरोहितोऽग्नौ
जुहाव विप्रैर्ग्रहशान्तये वै ।।२६।।

हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् ।
प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः ।।१३।।

हिरण्यरूप्यांशुकरक्तकोटी-
स्तिलान् सुकृष्णान् गुडमिश्रितांश्च ।।
प्रादादलङ्कारयुताः सुधेनूः
राजा विधिज्ञो द्विजमुख्यकेभ्यः ।।२७।।

एवं चेदिपती राजा दमघोषसुताय वै ।
कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम् ॥१४॥

पुत्रायाभ्युदयोचितं द्विजगणैर्मन्त्रज्ञकैः सोऽखिलं
कर्माकारयदादरेण दमघोषाख्यो नृपः साहसात् ॥८।१८॥

तं वै विदर्भाधिपतिः समभ्येत्याभिपूज्य च ।
निवेशयामास मुदा कल्पितान्यनिवेशने ॥१६॥

चैद्यं विदर्भाधिपतिः समेत्य
समित्रबन्धुः सह सैन्यकैस्तम् ॥
सम्पूजयामास सुवर्णवस्त्रा-
लङ्कारकैः पुत्रमुदेहया सः ॥३२॥

कृष्णरामद्विषौ यत्ताः कन्यां चैद्याय साधितुम् ।
यथागत्य हरेत्कृष्णो रामाद्यैर्यदुभिर्वृतः ॥१८॥
योत्स्यामः संहतास्तेन इति निश्चितमानसाः
आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः ॥१९॥

यदा समागत्य हरेद्विदर्भजां
कृष्णो बलाद्यैर्यदुभिः समन्वितः ॥
योत्स्याम तेनात्र वयं सुसंहता
स्सर्वे बला निश्चितमानसा स्त्वति ॥४२॥

बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः ॥
त्वरितं कुण्डिनं प्रागाद् गजाश्वरथपत्तिभिः ॥२१॥

बलेन सार्द्धं महतासहोदर-
स्नेहप्लुतः कुण्डिनमागता द्रुतम् ॥८।१८॥

भीष्मकन्या वरारोहा कांक्षन्त्यागमनं हरेः ।
प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत्तदा ॥२२॥

भीष्मात्मजा मन्दिरमध्यगा वरा-
रोहा हरेरागमनं समीक्षती ॥

प्रत्यागमं तस्य कवेरपश्यती
भयाकुला चिन्तयदात्मना तदा ।।१९।।

अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः ।।
नागच्छत्यरविन्दाक्षो नाहं वेद्मयत्र कारणम् ।।
सोऽपि नावर्ततेऽद्यापि मत्सन्देशहरो द्विजः ।।२३।।

अहोत्रियामान्तरितो विवाहो
मे मन्दविध्याःकमलायताक्षः ।।
नागच्छतीशोऽनलसो दयालुः
कृष्णो रमेशोऽत्र न वेद्मि हेतुम् ।।२०।।

अपि मय्यनवद्यात्मा मत्वा किञ्चिज्जुगुप्सितम् ।
मत्पाणिग्रहणे नूनं नायाति कृतोद्यमः ।।२४।।

आदौ न प्रस्थापितवान्द्विजोत्तमं
कृतोद्यमत्वादनवद्यविग्रहः ।।
प्रस्थानकाले तु जुगुप्सितं मयि
मत्वा कियत्तं प्रतिदिष्टवान् विभुः ।।२१।।

अतो हि सन्देशहरो मम द्विजो
नावर्ततेऽद्याप्यथवा ततो हरिः ।।
विनिर्गतो मत्करपीडनाय सो
मद्भाग्यवैमुख्यतयानुरोधितः ।।२२।।

दुर्भगाया न मे धाता नानुकूलो महेश्वरः ।
देवी वा विमुखा गौरी रुद्राणी गिरिजा सती ।।२५।।

हा दुर्भगाया मम नानुकूलो–
धाता महेशोऽथ शिवाद्रिकन्या ।।
देवी सती वा विमुखा सगौरी–
त्थं चिन्तयन्ती विकलास भैष्मी ।।२३।।

न्यमीलयत कालज्ञा नेत्रे चाश्रुकला कुले ।।२६।।
एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृप ।
वाम उरुर्भुजो नेत्रमस्फुरन् प्रियभाषिणः ।।२७।।

प्रतीक्षती सागमनं यदा हरे
न्यंमीलय नेत्रेऽश्रुकलाकुले तदा ।।
वामाक्षिवामोरुभुजो च प्रास्फुरन्
भीष्मात्मजायाः प्रियसूचकाः समम् ।।२८।।

अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः ।
अन्तः पुरचरींदेवीं राजपुत्रीं ददर्श ह ।।२८।।

प्राप्तेन कृष्णेन पुरोपदेशं
प्रेम्णा विनिर्दिष्टतरो द्विजाग्र्यः ।।
स एव भैष्मीं निजगेहमध्यगां
ददर्श देवी हरिपादलीनाम् ।।२९।।

सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती ।
आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता ।।२९।।

सा तं प्रहृष्टवदनं द्विजवर्यमारा—
दव्यग्रदेहगतिमात्मचरं विलोक्य ।।
तल्लक्षणज्ञा समपृच्छदाशु
द्वारावतीशागमनं मुदा वै ।।३०।।

तस्या आवेदयत्प्राप्तं शशंस यदुनन्दनम् ।।
उक्तं च सत्यं वचनमात्मोपनयनं प्रति ।।३०।।

आवेदयत्प्राप्तमजेशशेषसद्—
दैवं हृदीशं यदुनन्दनं तदा ।
तस्यै स्वयं ह्यानयनं हरेर्द्विजः
सशंस सत्यं वचनं ह्युपांशुतः ।।३१।।

प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ ।
अभ्ययात्तूर्यघोषेण रामकृष्णौ समर्हणैः ।।३२।।

प्राप्तौ च श्रुत्वा दुहितुर्विवाहे—
क्षणोत्सुकौ भीष्मनृपोऽभ्यगात्तौ ।।
समर्हणैस्तूर्यरवेण राम—
कृष्णौ द्विजैर्मंगलवाचकैश्चं ।।१०।९।।

मधुपर्कमुपानीय वासांसि विरजांसि सः ।
उपायनान्यभीष्टानि विधिवत्समपूजयत् ।।३३।।

वासांसि दिव्यानि विभूषणानि
रत्नानि स्वर्णं मधुपर्कमग्रे ।।
गजान्रथान्सतुरगान्सुवर्णा-
श्चितानुपानीय समर्चयत्तौ ।।१०।१०।।

तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः ।
ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा ।।३४।।

निवेशनं श्रीमदथोपकल्प्य
ससैन्ययोः सानुगयोर्यथावत् ।।
आतिथ्यमग्रं विदधे महद्धी
र्भीष्मस्तु रामाच्युतयोर्मुदा वै ।।११।।

कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः ।
आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपंकजम् ।।३६।।

आज्ञाय कृष्ण समुपागतं वरं
विदर्भराजेन्द्रपुरौकसो जनाः ।।
आगत्य नेत्राञ्जलिभिः पपुः भरं
तदास्यपूर्णेन्दुसुधां मनोहराम् ।।१२।।

अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा ।
असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ।।३७।।

अस्यैव भार्या भवितुं विदर्भ-
राजेन्द्रजैवार्हति नापरा वै ।।
भर्तायमेत्रोचित एव भैष्म्या
एवेति सर्वे जगदुर्वचस्ते ।।२३।।

किंचित् समुचितं यन्नस्तेन तुष्टस्त्रिलोककृत् ।
अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युत ।।३८।।

यत्किञ्चिदस्मत्सुकृतं तु तेन
तुष्टस्त्रिलोकेशपतिर्विधाता ।।
सोऽद्यानुगृह्णात्विति कृष्णचन्द्रो
गृह्णातु गृह्णातु करं हि भैष्म्याः ।।२४।।

एवं प्रेमकलाबद्धा वदन्तिस्म पुरौकसः ।
कन्या चान्तःपुरात्प्रागाद्भटैर्गुप्ताम्बिकालयम् ।।३९।।

एवं वदन्ति स्म पुरौकसस्ते
स्नेहानुबद्धानयनं मनश्च ।।२५।।
अन्तःपुराद्वीरवरैर्वरायुधै–
र्गुप्ता जगामाद्रिसुतार्चनाय सा ।।४५।।

पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम् ।
सा चानुध्यायती सम्यङ्मुकुन्दचरणाम्बुजम् ।।४०।।
यतवाङ्मातृभिः सार्धं सखीभिः परिवारिता ।
गुप्ता राजभटैः शूरैः सन्नद्धैरुद्यतायुधैः ।।
मृदङ्गशङ्खपणवास्तूर्यभेर्यश्च जघ्निरे ।।४१।।

द्रष्टुं देव्याः शिवायाश्चरणजलरुहं निर्ययौ कञ्जपद्भ्यां
स्वान्तेऽनुध्यायती स्वप्रियतमचरणाब्जं यतोक्तिर्यतासु। ।।
साद्धं सा मातृभिः स्वप्रियसखिसुवृ।। रक्षिता राजपुम्भिः
शूरैः सज्जैर्धृतास्त्रैस्त्रिदिवपतिभिरारात्सुधेवेन्द्र गेहे ।।४६।।

नानोपहारबलिभिर्वारमुख्यः सहस्रशः ।।
स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यः स्वलङ्कृताः ।।४२।।
गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः ।
परिवार्य वधूं जग्मुः सूतमागधवन्दिनः ४३।।

भेरीमृदङ्गानकशङ्खदुन्दभि–
वंशादयो नेदुरतीव हृत्प्रियम् ।।

नानोपहारैर्गणिकोत्तमा ययुः
सहस्रसोऽग्रे दुहितुर्नृपस्य वै ॥४ ७।

सृग्गन्धवस्त्राभरणैः स्वलङ्कृता
विप्राङ्गनाः जग्मुवधूमनूत्सवे ॥

गायन्त ईशं च सुवाद्यवादका–
स्तेगायकाः मागधसूतवन्दिनः ॥४८॥

आसाद्य देवी सदनं धौतपादकराम्बुजा ॥
उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम् ॥४४॥

आसाद्य देव्याः सदनं विदर्भजा
धौताङ्घ्रिहस्ताब्जतलोपस्पृश्य वाः ॥

शान्ता शुचिः सा प्रविवेश चाम्बिका–
न्तिकं हृदीशं ह्यनुचिन्तयन्त्यहो ॥५०॥

तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः ॥
भवानीं वन्दयां चक्रुर्भवपत्नीं भवान्विताम् ॥४५॥
नमस्ये त्वाम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम् ।
भूयात्पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ॥४६॥

वृद्धा विधिज्ञा द्विजवर्ययोषित–
स्तां वन्दयाञ्चक्रुरुमां भवान्विताम् ॥
अभीक्ष्णमम्ब स्वसुतान्वितां शिवां
त्वां वै नमस्ये हि हृदुक्तिविग्रहैः ॥५१॥

भूयात्पतिर्मे भगवांस्तुकृष्णो–
ऽनुमोदतां तद्भवती भवान्विता ॥५२॥

अद्भिर्गन्धाक्षतैर्धूपैर्वासः स्रङ्माल्यभूषणैः ॥
नानोपहारवलिभिः प्रदीपावलिभिः पृथक् ॥४७॥
विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत् ॥
लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः ॥४८॥

अद्भिश्च गन्धाक्षतधूपवास
सृङ्माल्यरोचिष्णुभिरर्चयच्छिवाम् ॥

नानोपहारैर्वलिभिः प्रदीप—
राजीभिरग्रे सुपृथग्पृथक्वधूः ॥५६॥
श्रुत्वैव गौर्याः वचनं प्रणम्य तां
विप्राङ्गनाः साथ सतीः समर्चयत् ॥
फलेक्षुताम्बूलसुगन्धधूपैः
सुकण्ठसूत्रैर्लवणेक्षुभिर्वधूः ॥५७॥

तस्यै स्त्रियस्ताः प्रदुदुः शेषां युयुजुराशिषः ॥
ताभ्यो देव्यै नमश्चक्रे शेषां च गृहे वधूः ॥४९॥

तस्यै स्त्रियस्ताः प्रददुर्हि शेषा—
मथाशिषः संयुयुजुः प्रमोदात् ॥
ताभ्यो नमस्कृत्य वधूः प्रसादं
जग्राह गन्तुं च समुत्सुकाभवत् ॥५८॥

मुनिव्रतमथ त्यक्त्वा निश्क्रामाम्बिकागृहात् ।
प्रगृह्य पाणिना भृत्यां रत्नमुद्रोपशोभिना ॥५०॥

त्यक्त्वाथमौनव्रतमम्बिकालया—
द्विनिर्जगामाथ सखीकरं वधूः ॥
रत्नाङ्गुलीयोपविभूषितेन सा
प्रगृह्य हस्तेन हरीप्ससाब्जजा ॥५९॥

तां देवमायामिव वीरमोहिनीं
सुमध्यमां कुण्डलमण्डिताननाम् ॥
श्यामां नितम्बार्पितरत्नमेखलां
व्यञ्जत्स्तनीं कुण्डलशङ्कितेक्षणाम् ॥५१॥

श्यामां देवमायामिव सुषमया मोहिनीं जित्वराणाम् ॥
संराजत्कुण्डलालङ्कृतविधुवदनीं कुंतलाशङ्कितेण—
दीर्घाक्षीं सन्नितम्बार्पितमणिरशनां सुस्मितामुच्चनासाम् ॥६०॥

शुचिस्मितां बिम्बफलाधरद्युति-
शोणायमाना द्विजकुन्दकुड्मलाम् ।।
पदा चलन्तीं कलहंसगामिनीं
सिञ्जत्कलानूपुरधामशोभिना ५२।।

विलोक्य वीरा मुमुहुः समागता
यशस्विनस्तत्कृतहृच्छयार्दिताः ।।
यां वीक्ष्य ते नृपतयस्तदुदारहास
व्रीडावलोकहृतचेतस उज्झितास्त्राः ।।५३।।
पेतुः क्षितौ गजरथाश्वगता विमूढा
यात्राच्छलेन हरयेऽर्पयन्तीं स्वशोभाम् ।।

सद्बिम्बोष्ठाधराभारुणरदविततिं व्यञ्जदग्रस्तनीं तां
सिञ्जन्मञ्जीरशोभायुतपदजलजेनाचलन्ती शनैर्हि ।।
मार्गे दृष्ट्वाग्र्यवीरा मुमुहुरतितरां तत्कृतानङ्गवेगा-
क्रान्ता भूपाः विचेतास्तरव इव बभूवुस्तदा कीर्तिमन्तः ।।६१।।
भूपाः सव्रीडहासेक्षणहृतहृदयाः राजहंसायतीं तां
दृष्ट्वा पेतुर्विमूढा गजरथ हयगा भूतलेऽथोज्झितास्त्राः ।।
रम्भास्त्रीव्रानिलार्ता इव निजपतये कृष्णचन्द्राय शोभां
दिव्यां स्वामर्पयन्तीं कलगमनमिषेणाब्जजां भीष्मपुत्रीम् ।।६२।।

सैवं शनैश्चलयती चलपद्मकोशौ
प्राप्तिं तदा भगवतः प्रसमीक्ष्यमाणा ।।५४।।
उत्सार्य वामकरजैरलकानपाङ्गैः
प्राप्तान्ह्रियैक्षत नृपान्ददृशेऽच्युतं सा ।।
तां राजकन्यां रथमारुरुक्षतीं
जहार कृष्णो द्विषतां समीक्षताम् ।।५५।।

मन्दं मन्दं हि भैष्मी चलजलजपदौ चालयन्त्यात्मभर्त्तुः
कृष्णस्यानन्दमूर्तेः परमभगवतः प्राप्तिमन्वेषमाणा ।
केशानुत्सार्य वामैररुणकररुहैरैक्षतापाङ्गतस्तान्
भूपान् प्राप्तान्ह्रियासादितनिजहरणायोद्यतं तं ददर्श ।।६६।।

तां भैष्मीं कमलामुरः कृतगृहां स्वस्यन्दनारोहण–
मिच्छन्तीं स जहार यादवपतिः कृष्णो द्विपामीक्षताम् ।।६८।।

रथं समारोप्य सुपर्णलक्षणं
राजन्यचक्रं परिभूय माधवः ।।
ततो ययौ रामपुरोगमैः शनैः
सृगालमध्यादिव भागहृद्धरिः ।।५६।।

दिव्ये तार्क्ष्यविभूषिते हयवरैर्युक्ते समीराशुगैः
कृष्णश्चक्रिणि रुक्मिणीं निजवधूमारोप्य लक्ष्मीं विभुः ।।
भूपांस्तान् परिभूय फेरवकुलात्सिंहो यथा भागहृद्
रामाद्यैर्यदुभिः ययौ सुशनकैः शङ्खादिकान् वादयन् ।।६९।

तं मानिनः स्वाभिभवं यशःक्षयं
परे जरासन्धवशा न सेहिरे ।।
अहो धिगस्मान् यश आत्तधन्वनां
गोपैर्हृतं केशरिणा मृगैरिव ।।५७।।

नैव स्वाभिभवं यशःक्षयकरं तं मानिनः सेहिरे
भूपाः शाल्वजरासुतप्रभृतयो बुद्ध्वा सखीनां रवैः ।।
अस्मान् धिग् धिगहो यतः क्षितिभृतामात्तायुधानां यशो
गोपैरद्य हृतं मृगैरिव मृगेन्द्राणां बलिं पश्यताम् ।।११।३।।

तानापतत आलोक्य यादवानीकयूथपाः ।
तस्थुस्तत्सम्मुखा राजन्विस्फूर्ज्य स्वधनूंषि ते ।।१०।५४।२।।

आलोक्य तानापततो हि यादवा–
नीकाधिपास्तस्थुररं तदुन्मुखाः ।।
टङ्कारयित्वा स्वधनूंषि दंशिताः
पुच्छान् समुद्यम्य यथा मृगेन्द्रकाः ।।५।।

अश्वपृष्ठे गजस्कन्धे अथोपस्थे च कोविदाः ।
मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा ।३।।

नाराचवर्षाणि ववर्षु वेगा-
द्रथाश्वदन्ता बलसैन्यकेषु ।।
ते कोविदा नामभिराक्षिपन्तो
मेघा यथापोह्य चलेषु तेषु ।।६।।

पत्युर्बलं शराशारैश्छन्नं वीक्ष्य सुमध्यमा ।।
सव्रीडमैक्षत्तद्वक्त्रं भयविह्वललोचना ।।४।।

पत्युर्बलं वीक्ष्य पृषत्कधारया-
च्छन्नं विदर्भेशसुतासुमध्यमा ।।
सव्रीडमैक्षद्भयविह्वलेक्षणी
सद्वक्त्रचन्द्रं निखिलव्यथापहम् ।।७।।

प्रहस्य भगवानाह मास्म भैर्वामलोचने ।।
विनंक्ष्यत्यधुनैवैतत्तावकैः शात्रवं बलम् ।।५।।

प्रहस्य तानाह जनार्दनस्तदा
मा भैः स्म वामाक्षि बलं हि शात्रवम्
एतद्विनंक्ष्यत्यधुनैव तावकै-
र्यदुप्रवीरैस्तृणवद्धुताशनैः ।।८।।

तेषां तद्विक्रमं वीरा गदसङ्कर्षणादयः ।।
अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान्रथान् ।।६।।

तद्विक्रमं शत्रुगणस्य वीक्ष्य
वीरागदाक्रूरबलादयस्तदा ।।
अमृष्यमाणा रथवाजिहस्तीन्
प्रक्ष्वेडनैर्जघ्नुरलं पदातीन् ।।९।।

पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि ।।
सकुण्डलकिरीटानि सोष्णीषाणि कोटिशः ।।७।।

शिरांसि पेतुर्गजिनां तुरङ्गिणां
शताङ्गिनां पत्तिगणस्य कोटिशः ।।
सकुण्डलश्रोत्रविभूषणानि स-
दुष्णीषयुक्तानि शरैश्छतानिव ।।१०।।

हस्ताः सासिगदेष्वासाः करभा उरवोऽङ्घ्रयः ।।
अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ।।८।।

गजाश्वनागाश्वतरा निपेतुः
खरा मनुष्याः शरभिन्नमस्तकाः ।।
हस्ताः सखड्गाः सगदाः सकार्मुकाः
उर्वङ्घ्रिजङ्घाः करभाश्च भूभृताम् ।।१७।।

हन्यमानबलानीका वृष्णिभिर्जयकांक्षिभिः ।
राजानो विमुखा जग्मुर्जरासन्धपुरःसरा ।।९।।

संहन्यमाने ध्वजिनीशते जरा-
सतादयो वै विमुखा ययुर्नृपाः
रासादिभिर्यादवयूथपैर्गजा
यथा मृगेन्द्रैर्जयकाशिभिर्मृधे ।।१६।।

शिशुपाल समभ्येत्य हृतदारमिवातुरम् ।
नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन् ।।१०।।

चद्यं समभ्येत्य गतोत्सवं नृपा
नष्टत्विषं शुष्कमुखं महातुरम् ।।
हृताबलातुल्यमवाङ्मुखं महा—
दुःखार्णवे संपतितं समूचुः ।।१८।।

भो भो पुरुषशार्दूल दौर्मनस्यमिदं त्यज ।
न प्रियाप्रिययोः राजन्निष्ठा देहिषु दृश्यते ।।११।।

भो भो नृशार्दूल चिदीशनन्दन
त्वं दौर्मनस्यं त्यज चैतदात्मनः ।।
राजन् यतो देहिषु न प्रियाप्रिय—
निष्ठा स्वदिष्टस्य वशेषु दृश्यते ।।२०।।

यथा दारुमयी योषिन्नृत्यते कुहकेच्छया ।।
एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः ।।१२।।

योषिद्यथा दारुमयीह नृत्यते
सदेच्छया नर्तयितुः क्षितीश्वर ।।

एवं जनोऽयं सुखदुःखयोः परा-
धीनः परेशस्य समीहते भृशम् ।।२१।।

शौरेः सप्तदशाहं वै संयुगानि पराजितः ।
त्रयोविंशतिभिःसैन्यैर्जिग्य एकमहं परम् ।।१३।।

पराजितः सप्तदशाहमाहवान्
सैन्यैस्त्रयोविंशतिभिर्जरासुतः ।।
कृष्णात्परं त्वेकमनीमकन्तिमं
सौरेः सरामाज्जितवान् बलैर्युतः ।।२२।।

तथाप्यहं न शोचामि न प्रहृष्यामि कर्हिचित् ।
कालेन देवयुक्तेन जानन् विद्रावितं जगत् ।।१४।।

शोचाम्यहं नैव तथापि कर्हिचि-
न्नवै प्रहृष्यामि जगद्धयनेहसा ।।
विद्रावितं कर्मवशं बलीयसा
तद्दैवयुक्तेन नभस्वताभ्रवत् ।।२४।।

अधुनापि वयं सर्वे वीरयूथपयूथपाः ।
पराजिता फल्गुतन्त्रैर्यदुभिः कृष्णपालितैः ।।१५।।

अद्यापि सर्वे क्षितिपाः पराजिताः
वीराग्रणी यूथपयूथपा वयम् ।।
कृष्णान्वितैः स्वल्पबलैर्हि यादवैः
कालानुकूलैस्त्रिदशैरिवासुराः ।।२५।।

रिपवो जिग्युरधुना काल आत्मानुसारिणि ।
तदा वयं विजेष्यामो यदाकालः प्रदक्षिणः ।।१६।।

आत्मानुसारिण्यधुना ह्यनेहसि
जिग्युर्द्विषोऽस्मान्नियतिःप्रदक्षिणा ।।
यदा भवेत्तर्हि वयन्त्विमान्रिपून्
जेष्याम एवं जगदुर्महीभृतः ।।२६।।

एवं प्रबोधितो मित्रैश्चैद्योऽगात् सानुगः पुरम् ।।
हृतवेषा पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः ।।१७।।

प्रबोधितोमागधशाल्वकादिभि-
रेवं चिदीशः स्वसुहृद्धितानुगः ।।
अगात्पुरं ते च हतावशेषिताः
स्वं स्वं पुरं जग्मुरवाङ्मुखाःह्रियाः ।।२७।।

रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन् स्वसुः ।।
पृष्ठतोऽन्वगमत् कृष्णमक्षौहिण्यावृतो बली ।।१८।।

रुक्मी स्वसू राक्षसपाणिपीडनं
श्रुत्वासहन् कृष्णरिपुः शुचाकुलः ।।
अक्षौहिणी संवृत आशु पृष्ठतो-
ऽन्वगाद्रुषा दन्तधृताधरो बली ।।३६।।

रुक्म्यमर्षी सुसंरब्धः शृण्वतां सर्वभूभुजाम् ।
प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः ।।१९।।

सुखप्रदं स्वौषधिवत्पितुर्वचो-
नादृत्य रुक्मी कुमतिह्यमर्षितः ।।
संश्रृण्वतां सर्वमहीभुजां महा-
बाहुः प्रतिज्ञामकरोद्धठेन सः ।।१२।१।।

अहत्वा समरे कृष्णमप्रत्यूह च रुक्मिणीम् ।
कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद्ब्रवीमि वः ।।२०।।

कृष्णं ह्यहत्वा समरे सुदुर्मदं
भैष्मीमनानीय च कुण्डिनं पुरम् ।।
नाहं प्रवेक्ष्यामि सुसत्यमेतद्
ब्रवीमि वोऽग्रे स्वधनुः प्रगृह्य वै ।।२।।

इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वरः ।
चोदयाश्वान्यतः कृष्णस्तस्य मे संयुगं भवेत् ।।२१।।

रुक्मीति चोक्त्वा कवचावृतो रथ—
मारुह्य यन्तारमुवाच सत्वरः ।

तुरङ्गमान्नोदय द्वारिकापतिः
कृष्णो यतस्तस्य भवेन्मृधं यथा ।।३।।

अथाहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः ।
नेष्ये वीर्यमदं येन स्वसा मे प्रसभं हृता ।।२२।।

अद्यैव बाणैर्निशितैः सुदुर्मते—
र्गोपस्य नेष्ये बलवीर्यजं मदम् ।।
येन स्वसा मे प्रसभं हृतातुला—
नादृत्य मां वीर्यतिरस्कृताखिलम् ।।४।।

विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित् ।
रथेनैकेन गोविन्द तिष्ठ तिष्ठेत्यथाह्वयत् ।।२३।।

विकल्पमानः परमेश्वरस्या—
प्रमाणवित्सज्जधनुः कुबुद्धिः ।।
गोविन्दमेकेन रथेन तिष्ठ—
तिष्ठेत्यधावत् करिणं यथा श्वा ।।५।।

धनुः विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः ।
आह चात्र क्षणं तिष्ठ यदूनां कुलपांसन ।।२४।।

विकृष्य चापं सुदृढं त्रिभिः शरै—
र्जघ्ने बलात्कृष्णमुवाच कोपतः ।।
अत्र क्षणं यादववंशपासन
तिष्ठाद्य वीर्यं ह्यवलोकयामि ते ।।६।।

कुत्र यासि स्वसारं मे मुषित्वा ध्वांक्षवद्धविः ।
हरिष्येऽद्यमदं मन्दमायिनः कूटयोधिनः ।।२५।।

ममासमक्षं भगिनीं हविर्यथा
काको मुषित्वा त्वमरं क्व गच्छसि ।।
अहं हरिष्येऽद्य मदं सुमायिनो
मन्दस्य शत्रोस्तव कूटयोधिनः ।।७।।

यावन्न मे हतो वाणैः शयीथा मुञ्च दारिकाम् ।
स्मयन्कृष्णो धनुश्छित्वा षड्भिर्विव्याध रुक्मिणम् ॥२६॥

यावन्न मे त्वं विशिखैर्हतः कौ—
शयीथ तावत्त्यज मच्छ्वसारम् ॥
इत्थं ब्रुवन्तं विशिखैः स्मयन्हरि—
श्छित्वा धनुः षड्भिरताडयत् स्मयन् ॥८॥

अष्टभिश्चतुरो वाहान्द्वाभ्यां सूतं ध्वजं त्रिभिः ।
स चान्यद्धनुरादाय कृष्णं विव्याध पञ्चभिः ॥२७॥

जघान वाहांश्चतुरोऽष्टभिः शरै—
र्द्वाभ्यां ध्वजं सूतमरं त्रिभिर्द्विषः ॥
रुक्म्यन्यदादाय धनुस्तु पञ्चभि—
र्विव्याध कृष्णं विशिखैर्मृधे बली ॥९॥

तैस्ताडितः शरोघैस्तु चिच्छेद धनुरच्युतः ।
पुनरन्यदुपादत्त तदप्यच्छिनदव्ययः ॥२८॥

तैस्ताडितस्तस्य धनुः शरोघै—
श्चिच्छेद कृष्णोऽथ स चापमन्यम् ॥
जग्राह तं चाच्छिनदव्ययोऽथ
रुक्मी भृशं क्रोधसमाकुलोऽभूत् ॥१०॥

परिघं पट्टिशं शूलं चर्मासी शक्तितोमरौ ॥
यद्यदायुधमादत्त तत्सर्वं सोऽच्छिनद्धरिः ॥२९॥

शूलं च शक्तिं परिघं च पट्टिशं
सचर्म खड्गं मुशलं च तोमरम् ॥
शस्त्रं स यद्यत्स उपाददे तत्—
तदच्छिनत् सर्वमसौ हरिर्हि ॥११॥

ततो रथादवप्लुत्य खड्गपाणिर्जिघांसया ॥
कृणमभ्यद्रवत्क्रुद्धः पतङ्ग इव पावकम् ॥३०॥

रथादवप्लुत्य ततोऽसिपाणि—
जिघांसया भीष्मसुतस्तु रुक्मी ।।
अभ्यद्रवत्कृष्णमरण्यवह्निं
पतङ्गवद् दन्तधृताधरः सः ।।१२।।

तस्यापततः खड्गं तिलशश्चर्मं चेषुभिः ।।
छित्वासिमाददे तिग्मं रुक्मिणं हन्तुमुद्यतः ।।३१।।

खड्गं तु तस्यापततः स चर्म
छित्वा शरैर्वै तिलशोऽच्युतोऽरिम् ।।
तं रुक्मिणं हन्तुमुपाददेऽसिं
तिग्मं प्रचण्डारिशिरश्छिदं तम् ।।१३।।

दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणी भयविह्वला ।।
पतित्वा पादयोर्भर्तुरुवाच करुणं सती ।।३२।।

दृष्ट्वा तदा भ्रातृवधोद्यतं सती
भर्तुः पतित्वा पदयोर्हि रुक्मिणी ।।
भीविह्वलाङ्गा करुणं कृपार्णवं
जगाद तज्जीवनकाम्ययेश्वरम् ।।१४।।

योगेश्वराप्रमेयात्मन् देव देव जगत्पते ।
हन्तुं नार्हसि कल्याण भ्रातरं मे महाभुज ।।३३।।

योगेश्वरामेयबलाप्रमेयात्
मन्देव देवाखिललोकनाथ ।।
अधीश कल्याण महाभुजेश
हन्तुं न मद्भ्रातरमर्हसि त्वम् ।।१५।।

तया परित्रासविकम्पिताङ्ग्या
शुचावशुष्यन्मुखरुद्धकण्ठया ।।
कातर्यविस्रंसितहेममालया
गृहीतपादः करुणो न्यवर्तत ।।३४।।

रुक्मिण्याः परिभीविकम्पिततरस्तन्वातिशोकेन वै
संक्षुब्यन् मुखयावरुद्धगलया नेत्राम्बुपूर्णास्यया ॥
वैक्लव्यस्खलिताग्ररक्तकनकामूल्यसृगा वत्सलः
कृष्णस्तत्र गृहीतकञ्जचरणो घातान्निवृत्तोऽभवत् ॥१६॥

तथाभूतं हतप्रायं दृष्ट्वा सङ्कर्षणो विभुः ।
विमुच्य बद्धं करुणो भगवान् कृष्णमब्रवीत् ॥३६॥
असाध्विदं त्वया कृष्ण कृतमस्मज्जुगुप्सितम्
वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधः ॥३७॥

दृष्ट्वा बलस्तं मृततुल्यमाकुलं
विमुच्य बद्धं करुणार्णवो विभुः ॥
उवाच कृष्णं भगवानसाध्विदं
त्वया कृतं नोऽतिजुगुप्सितं हरे ॥२२॥
श्मश्रोः कचानां वपनं विरूपता
वधोऽस्ति लोके सुहृदो रिपोः सदा ॥२३॥

मैवास्मान्साध्व्यसूयेथा भ्रातुर्वैरूप्यचिन्तया ॥
सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक् पुमान् ॥३८॥

असूयया स्यान्न समीक्ष साध्वि भो
स्वभ्रातृवैरूप्यविचिन्तयानघे ॥
नान्योऽस्ति कश्चित् सुखदुःखदो यतः
स्वकर्मभुक् सर्वजनः समीक्ष्यते ॥२४॥

बन्धुर्वधार्हदोषोऽपि न बन्धो वधमर्हति ।
त्याज्यः स्वेनैव दोषेण हतः किं हन्यते पुनः ॥३९॥

रामोऽनुजं प्राह पुनः स्वबान्धवो
वधार्हदोषोपि वधं न बन्धुतः ॥
अर्हत्यतस्त्याज्यतरः स्वदोषतो
हतः पुनः किं बत हन्यते हरे ॥२५॥

क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः ।
भ्रातापि भ्रातरं हन्याद्येन घोरतरस्ततः ।।४०।।

भैष्मीं पुनाराम उवाच वेधसा
धर्मो नृपाणामयमाविनिर्मितः ।।
भ्रातापि हन्यात्सहजं यतस्ततो
घोरोऽत्र न को ह्यपराध आर्ये ।।२६।।

राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः ।
मानिनोऽन्यस्य वा हेतोः श्रीमदान्धाः क्षिपन्ति हि ।।४१।।

कृष्णं पुनः प्राह बलोऽर्थराज्ययो–
र्भूमेः स्त्रियोऽन्यस्य च मानतेजसोः ।।
हेतोः क्षिपन्ति ह्यभिमानिनो जना
ये श्री मदान्धाः न हि योग्यमस्ति नः ।।२७।।

तवैयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम् ।
यन्मन्यसे सदाभद्रं सुहृदां भद्रमज्ञवत् ।।४२।।

रामस्तां पुनराह भैष्मि विषमा बुद्धिस्तवेयं शुभे
भ्रातॄणां निखिलेषु जन्तुषु विपक्षाणां शुभं वै तथा ।।
चैद्यानामशुभं त्वमिच्छसि यतस्तेषामिदं मुण्डनं
दण्डात्म्यं शिवमेव जातमशुभं तन्मन्यसे मूढवत् ।।२८।।

आत्ममोहो नृणामेष कल्प्यते देवमायया ।
सुहृद्दुर्हृदुदासीन इति देहात्ममानिनाम् ।।४३।।

नृणामात्मविमोह एष हरिमायातः शुभे कल्प्यते
औदासीन इतिद्विषश्च सुहृदो देहात्मसम्मानिनाम् ।।२९।।

नात्मनोऽन्येन संयोगो वियोगश्चासतः सति ।
तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रूपाभ्यां यथा रवेः ।।४६।।

जन्मादयस्तु देहस्य विक्रियाऽत्मनः क्वचित् ।
कलानामिव नैवेन्दोर्मृतिर्ह्यस्य कुहूरिव ।।४७।।

नस्तोऽन्येन कलेवरेण सति संयोगो वियोगोऽसता
तद्द्योतातपकस्य चात्मन इहेनस्येव दृग्रूपयोः ॥
जन्माद्या विविधाः क्रियास्तु वपुषां दृष्टा कलानामिवे-
न्दोः क्वापि न चात्मनोऽस्त्यमरणं दर्शो यथा सच्चिदः ॥३१॥

यथा शयान आत्मानं विषयान्फलमेव च ।
अनुभुङ्क्तेऽप्यसत्यर्थे तथाऽप्नोत्यबुधो भवम् ॥४८॥

यथा शयानः पुरुषोऽनुभुङ्क्ते
भोग्यांश्च भोक्तारमहो नु भोगम्
अर्थे ह्यसत्येवमविद्ययाद्वयः
प्राप्नोति संसारमनूद्भवात्ययम् ॥३२॥

तस्मादज्ञानजं शोकमात्मशोषविमोहनम् ।
तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते ॥४६॥

तस्मादपाकृत्य शुचिस्मते शुच-
मज्ञानजं स्वात्मविशोषमोहनम् ॥
संसार दुःखप्रदमात्मबोधतः
स्वस्था भवानन्दसमुद्रमाभज ॥३३॥

एवं भगवता तन्वी रामेण प्रतिबोधिता ।
वैमनस्यं परित्यज्य मनोबुद्ध्या समादधे ॥५०॥

एवं विदर्भेशसुता प्रबोधिता-
नन्तेन रामेण परात्परेण वै ॥
तद्वैमनस्यं ह्यपहाय मानसं
समादधे चेतनया गभीरया ॥३४॥

प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः ।
स्मरन्विरूपकरणं वितथात्ममनोरथः ॥५१॥

प्राणावशेषोऽरिभिराहत प्रभा-
नीकः समुत्सृष्टतरः सुदुर्मनाः ॥

स्मरन्विरूपाकरणं ह्यवाङ्मुखो
बभूव रुक्मी वितथात्मदोहृदः ।।३६।।

(चक्रे भोजकटं नाम निवासाय महत्पुरम् ।।)
अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीयसम् ।।
कुण्डिनं च प्रवेक्ष्यामीत्युक्त्वा तत्रावसद्रुषा ।।५२।।

महत्पुरं भोजकटाह्वयं तद्-
भूमौ निवासाय हतात्मकामः
चक्रेऽथ भूभृन्निकटे जगाद
रुक्मी स्ववाक्स्थापक ईर्ष्ययाढ्यः ।।३७।।

कृष्णं ह्यहत्वा पशुपालकं मृधे
नावर्त्य भैष्मीं भगिनीं च कुण्डिनम् ।।
नाहं प्रवेक्ष्यामि स भीष्मजस्तदे-
त्युक्त्वावसत्तत्र रुषा कुरूपितः ।।३८।।

नरा नार्यश्च मुदिताः प्रमृष्टमणिकुण्डलाः ।
परिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः ।।५५।।

नराश्च नार्यो मुदिताः वराम्बराः
प्रमृष्टकर्णाभरणाङ्गदोर्मिकाः ।।
मोदादुपाजह्रुरुपायनं वरं
भैष्मीशयो रम्यविचित्रवाससोः ।।१३।२६।।

तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे ।
अभूदनन्यभावानां कृष्णे यदुपतौ नृप ।।५४।।

महोत्सवस्तत्र गृहे गृहे यदु-
पुर्यां नृणां देव सुविस्मयावहः ।।
कृष्णे रतानां तदनन्यरागिणा-
मभून्महानन्दमयोऽनुरागजः ।।१३।२५।।

# परिशिष्टानि २

रुक्मिणीमङ्गलकाव्ये चिन्त्यप्रयोगाः --

१—गच्छन्त्याद्रिसुतागृहात् (गच्छन्त्या + अद्रि)
२—लीनाथ (१०।७०) (लीना + अथ)
३—चन्द्रमाभूत् (१३।४२) चन्द्रमाः + अभूत्
४—एवं सः परमेष्ठिना (५।२२)
५—योत्स्याम तेनात्र (८।४२)

अत्र सलोपविधायकस्य नित्यं ङितः (३।४।९९) सूत्रस्य ङित् लकारेष्वेव प्रवृत्त्या लृटि सलोपाभावात् विसर्गेणावश्यमेव भाव्यम्। तथा च योत्स्यामः इति साधुप्रयोगः स्यात्। किं च युध् धातोः परस्मैपदे प्रयोगोऽपि चिन्त्य एव अनुदात्तत्व-लक्षणमात्मने पदमनित्यम्। इत्यस्याश्रयणात्॥

६—हृद्देश (६।१९)
७—यदिहया (५।२१) (यत् + ईहया)
८—मरिष्य अथवा (४।३) (मरिष्ये + अथवा)
९—प्रतीक्ष्यन् (१०।३९)
१०—असहन् (१०।३६) (असहमानः इत्यस्य)
११—शोचम् (९।४१)
१२—वाचितुम् (५।२३)
१३—सम्पूजयित्वा (१।४८,१०।३१)
१४—श्रुत्य (३।१५, ४।८) अर्प्य नम्य (७।३२)
१५—निवेदयत् (५।२२) (न्यवेदयदित्यस्य स्थाने)
१६—विदधे (१३।४१) कर्तुर्बहुलतया क्रियाया एकवचनप्रयोगश्चिन्त्यः
१७—अम्ब सुते (१०।४१) (सुते इत्यस्य विशेषणत्वेनाम्ब शब्दः)
१८—अपश्यती (९।३४)
१९—रुदन्ती (१०।३९)
२०—शिरो नतोऽभवत् (९।१३)

२१–दृशिति स्त्रीलिङ्गशब्दस्य प्रथम इति पुल्लिङ्गशब्देन सह प्रयोगः (८।२१)
२२–"मा" इति शब्दो रुक्मिण्या विशेषणः
२३–मनोऽर्थं (१।४६) मनोऽर्थभङ्गं (४।१८)
२४–आस (८।२२, २३) (१३।४७, ५०)

धातुपाठे त्रयः अस् धातवः पठितास्तत्र एकः भ्वादिगणीयो गतिदीप्ति आदानेष्वर्थेषूपदिष्टः द्वितीयश्च भ्वादिगणीयः सत्तार्थे प्रोक्तः यस्य च सार्वधातुकलकारेष्वेव रूपाणि प्रयुज्यन्ते, अन्यत्र लकारेषु तस्य भूभावो भवति अस्तेर्भूः इतिपाणिनीयानुशासनात्। तृतीयश्च दिवादिगणे पठितः असुप्रक्षेपणे इति कथितः। अदादिगणीयस्यास् धातोः आस इति रूपं, न भवितुमर्हति, तत्र बभूव इति रूपस्य प्रसिद्धत्वात्। दिवादिगणे उक्तस्य अस् धातोरपि नेदं रूपम्, अस्यार्थविरोधात्।

अतः परिशेषाद् भ्वादिगणीयस्यैवास्धातो रूपमिदं वक्तुं शक्यते तस्य त्रयोऽर्थाः तत्र प्रकरणादिना (१३।४७,५०) दीप्त्यर्थग्रहणे क्षतिविरहः। अथवा परम्परया चतुःषु श्लोकेष्वेव प्रयुज्यमानस्यास् भुवि इति धातोरेव परोक्षे लिटि, आस इत्यपाणिनीयः प्रयोगो वक्तव्य, इति भाषावैज्ञानिकानां विषयः।
३१–समुत्सृजिष्यामि (४।२८)

"सृज् विसर्गे" अयं धातुः धातुपाठे उभयथा समुपलभ्यते। श विकरणेन सह श्यन् विकरणेन च तत्र श्यन् विकरणीय दैवादिकात् आत्मनेपदम्, शविकरणीयतौदादिकात्तु परस्मैपदम्। उभयत्रापि धातोः अनिट्त्वेन किरवाच्च, सृजिदृशोर्झल्यमकिति (६।१।५८) इति सूत्रेण अमागमे सति यत्र परस्मैपदे स्रक्ष्यामि इति रूपयोरन्यतरेण भाव्यम्। इडागमाभावाच्च पुस्तकेषु उपलब्धं रूपं सर्वथा चिन्त्यमिति।

# परिशिष्टानि ३

## श्लोकानुक्रमणिका